# अथ तृतीयो अध्यायः

## Contents

## *प्रथमः पादः*

सर्वोपनिषदां सिद्धो ह्यविरोधे समन्वयः।
कथं बोधकता तासां स तृतीये विचार्यते॥1॥
एकं वाक्यं प्रकरणं शाखाः सर्वाः सहैव वा।
एकां विद्याम् अनेकां वा जनयन्तीति चिन्त्यते॥2॥
ससाधने हि पुरुषे जन्मना कर्मणा शुचौ।
केवले वा यथा योगे प्रथमं तद् विचार्यते॥3॥
विचारपूर्वकं तस्य ब्रह्मभावाप्तियोग्यता।
अधिकारे ततः सिद्धे विषयावधृतिस्ततः॥4॥
अन्तरङ्गविचारेण गुणानामुपसंहृतिः।
बहिरङ्गविचारेण कर्मणामिति सा द्विधा॥5॥

तस्माद् अधिकारिणो जन्मनिर्धारः. तदनु तस्य ब्रह्मभावयोग्यता. ततो गुणोपसंहारः. ततो अङ्गविचारः इति. तत्र प्रथमे पादे जीवस्य ब्रह्मज्ञानौपयिकं जन्म विचार्यते. तत्र पूर्वजन्मनि निष्कामयज्ञकर्तुः ज्ञानरहितस्य मरणे ज्ञानाभावेन यज्ञाभिव्यक्त्यभावाद् भूतसंस्कारकएव यज्ञो जातइति, निष्कामत्वाच्च तदधिकारि-

देवाधीनान्येव भूतानीति, ते देवाः तत्र-तत्र हुत्वा तस्य शरीरं सम्पादयन्ति इति "पञ्चम्याम् आहुतावापः पुरुषवचसो भवन्ति" (छान्दो.उप. 5।9।1) इति श्रुतिः. तत्र जीवेन्द्रियाणां होमाभावेन अशुद्धिम् आशङ्क्य तेषामपि होमं वक्तुम् इदम् अधिकरणम् आरभते.

नच पञ्चाहुतयो धूममार्गएव, तत्र गमनागमनयोः बहुविशेषश्रवणात्. "तद् य इत्थं विदुः ये च इमे अरण्ये श्रद्धातप इत्युपासते, ते अर्चिषम् अभिसम्भ-वन्ति" (छान्दो.उप.5।10।1) इति तज्ज्ञानवतोऽपि यत्र अर्चिःप्राप्तिः तत्र तथा देवहुतानां कथं सा न स्यात् ज्ञानार्थमेव तथोत्पत्तेः. पुनरावृत्तिः परं तुल्या.

अथवा निष्कामएव धूममार्गः, "योगी प्राप्य निवर्तते" (भग.गीता 8।25।) इति स्मरणात्. भोगार्थमेव धूमादिलोकाः. निष्पत्तिस्तु पञ्चाग्नावेव. अन्ने प्रविष्टानाम् अन्येषामपि रेतोद्वारा योनितः उत्पत्तिः इति कपूयचरणवर्णनम्. "एवं त्रयीधर्मम् अनुप्रपन्ना गतागतं कामकामा लभन्ते" (भग.गीता 9।21) इति कामनायां भिन्नएव प्रकारः, पृथग् उपदेशात्.

तस्माद् योग्यशरीरनिष्पत्तये स्वयमेव गच्छति भूतसहितः, श्रद्धाहोमानन्तरं सोमभावे वा सम्बन्धः? इति संशयः. भिन्नपक्षे योनौ वा इति. तत्र श्रौते अर्थे श्रौतन्यायेनैव निर्णयस्य उचितत्वाद् आहुतौ अपां गौणत्वापत्तेः संस्कृतभूतानां उपस्थापकत्वाभावात् शरीरवियोगे देवानां च तावद् विलम्बे कारणाभावाच्च श्रद्धारूपा आपएव हूयन्ते. अतो न तैः परिष्वक्तो गच्छति इत्येवं प्राप्ते. उच्यते,

तदन्तरप्रतिपत्तौ रंहति

## सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥1॥(3।1।1)

तस्य जीवस्य यज्ञादिकर्तुः अन्तरप्रतिपत्तौ, अन्तरे मध्ये, मुख्यप्रतिपत्तेः मोक्षलक्षणायाः अर्वाग् योग्यशरीरनिष्पत्त्यर्थम्. न हि वस्तुतो यज्ञानाम् इदं फलं भवति. अतो मुख्ये विलम्बात् प्रतिपत्तिः एषा. तस्य मुख्यफलस्य वा अन्तरे या प्रतिपत्तिः तदर्थं वा. तत्कारणभूतैः सम्परिष्वक्तएव रंहति, मरणानन्तरमेव कर्मसमाप्तेः. सम्यग् भूतानि तदैव संस्कृतानि. प्रतिदिनसंस्कारार्थं च नैकट्यम् अपेक्षते. अतः सम्यगेव च परिष्वक्तः. पूर्वं शरीरेण व्यवधानात्. शरीरदाहे वा तद्गतानि भूतसूक्ष्माणि सम्यक् तमेव आसक्तानि. "तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च" (बृहदा.उप.4।4।2) इति. जीवपक्षे ज्ञानकर्मणी. कर्मणो हि स्वरूपभूता आपः. तत्र हेतुः प्रश्ननिरूपणाभ्याम्. "वेत्थ यथा पञ्चम्याम् आहुतावापः पुरुषवचसो भवन्ति" (छान्दो.उप.5।3।3) इति प्रश्नः. "असौ वाव लोको गौतमाग्निः तस्य आदित्यएव समिद्" (छान्दो.उप.7।4।1) इत्यादि निरूपणम्. प्रश्ने हि पुरुषत्वं वदति, न देहमात्रम्. तद् जीवाधिष्ठितानामेव भवति, सिद्धवत्कारवचनाच्च. निरूपणेऽपि चन्द्रो भवति इति. तत्रापि सोमो राजा चेतनः. न हि अन्याधिष्ठाने हि अन्यस्य शरीरं भवेत्. तथान्नरेतोगर्भाश्च. अन्यथापि विनियोगसम्भवात्. जीवसाहित्येऽपि अपामेव

मुख्यत्वं, शरीरवत्. अयं होमः तत्र तथा तं जनयन्तीति न दुःखहेतुः. तस्मात् प्रश्ननिरूपणान्यथानुपपत्या सम्परिष्वक्तएव संस्कृतैः भूतैः रंहति इति सिद्धम्॥1॥

त्र्यात्मकत्वात्तु भूयस्त्वात्॥2॥

नन्नु कथं भूतसंस्कारमात्रत्वम् अवगम्यते, यावता प्रश्ननिरूपणाभ्याम् आपएव अवगम्यन्ते. नच तावन्मात्रसंस्कारकत्वं, नियामकाभावात्. "अस्थि चैव तेन मांसं च यजमानः संस्कुरुते" (तैत्ति.ब्राह्म.1।5।9।7) इति विरोधश्च इति शङ्कां निराकरोति 'तु'शब्दः.

अपामेव ग्रहणेन तेजोऽबन्नानि गृहीतानि ज्ञातव्यानि. कुतः? त्र्यात्मकत्वात्. लोकादिनिर्माणानन्तरभावित्वात् ता आपः त्रिवृत्कृताएव. अतः त्रयोऽपि गृहीता अपां ग्रहणेन. उपलक्षणत्वेऽपि अपामेव ग्रहणे हेत्वन्तरम् आह भूयस्त्वात्. शुद्धत्वाद् विशेषाभावात् मध्यभावाच्च. दीक्षिततुल्यत्वेन भारूपत्वेन अग्रे वक्तव्यत्वात्. शुद्धापामेव इदं शरीरम्. बहुहेतुकत्वमेव भूयस्त्वम्. बहुधा परिणामाच्च. द्रव्यभूयस्करत्वं च. तस्माद् नियामकानां भूयस्त्वाद् अपामेव ग्रहणम्॥2॥

प्राणगतेश्च॥3॥

वैदिकीं युक्तिम् उक्त्वा लौकिकीम् आह. प्राणस्य गतिः प्राणगतिः. "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" (बृहदा.उप.4।4।2) इति प्राणाप्यायन-जनकत्वाद् अपाम्. प्राणो गच्छन् स्वाप्यायकं गृहीत्वैव गच्छति. जलौकावद् अन्यत्र देहसम्बन्धः. मुक्तौ न प्राणाः गच्छन्ति. क्रमम् उक्तावपि देहसम्बन्धः इति पौराणिकाः. देवभावः इति औपनिषदाः. अतो दूरे प्राणगतिः अत्रैव. अतो अपां संश्लेषो वक्तव्यः. 'च'काराद् "विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च" (बृहदा.उप.4।4।2) इति कर्मसहभावं बोधयति श्रुतिः. तस्माद् अद्भिः परिष्वक्तो गच्छति॥3॥

अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्॥4॥

श्रुतिविरोधं परिहरति. परस्परविरोधे व्यवस्था वा बोध्यते. ननु "यत्र अस्य पुरुषस्य मृतस्य अग्निं वागप्येति, वातं प्राणः"(बृहदा.उप.3।2।13) इत्यादिना अग्न्यादिगतिः प्राणानां श्रूयते. नच "ओषधीः लोमानि वनस्पतीन् केशाः"(बृहदा.उप.3।2।13) इत्यत्र प्रत्यक्षविरोधाद् बाधितविषया इयं श्रुतिः इति वाच्यम्. आध्यात्मिकेन्द्रियमध्यपाताद् लोमकेशापि आध्यात्मिकाएव ग्राह्याः यैः कण्डूलावण्यप्रतीतिः. दृश्यमानानितु गोलकस्थानानि. तस्मात् प्राणोत्क्रमण-श्रुतिः अग्न्यादिभावश्रुत्या बाध्यते इति चेद्, न, भाक्तत्वात्. प्रकरणव्यतिरेकेण अमुक्तविषये प्रवृत्ता भाक्ता भवति. "अथ हैनं जारत्कारव आर्तभागः प्रपच्छ" (बृहदा.उप.3।2।1) इत्यत्र ग्रहनिरूपणानन्तरं मृत्युं पृष्ट्वा म्रियमाणप्रश्ने, "नामैव न जहाति अन्यद् जहाति" इति प्रतिज्ञाते, प्राणोत्क्रमणप्रश्ने, 'न' (तत्रैव 3।2।11) इति प्रतिवचने, वागादीनाम् अग्न्यादिभावानुवादः. ततो *मन्त्रणाजीवस्य ब्रह्मभावो अवगम्यते. सामग्र्या गतत्वात्. "तौ ह यदूचतुः" (बृहदा.उप.3।2।13) इति

कर्मप्रशंसा भिन्नप्रश्नोत्तरा, उभयोः वचनविधानात्. ब्रह्मविद्या च गोप्या. उत्क्रमणश्रुतिस्तु "स यत्रायं शारीर आत्मा" (बृहदा. उप.4।4।1) इति ब्राह्मणे जीवस्य परलोकविहारार्थं "निष्क्रामति चक्षुष्टो वा" (बृहदा.उप. 6। 4 ।2) इत्यादिना प्राणानां विहारसाधकानां निर्गमनम् आह. अतो मुक्तामुक्तविषयभेदस्य व्यवस्थापकस्य विद्यमानत्वाद् अग्न्यादिभावश्रुतिः न उत्क्रमणश्रुतिबाधिका. तस्माद् अन्यत्र सिद्धो धर्मो अन्यत्र अवस्थासाम्याद् योज्यमानो भाक्तो भवति. अतः प्राणोत्क्रमणम् अस्ति. तस्मात् सम्परिष्वक्तो गच्छति इति सिद्धम्॥4॥

प्रथमेऽश्रवणाद् इति चेद् न ता एव ह्युपपत्तेः॥5॥

किञ्चिद् आशङ्क्य परिहरति. "असौ वा व लोको गौतमाग्निः" (छान्दो.उप.5।4।1) इत्यत्र, "देवाः श्रद्धां जुह्वति" (तत्रैव 5।4।2) इति श्रुतेः आपो न सङ्कीर्तिताः. अपां हि पञ्चम्याम् आहुतौ पुरुषवचनम्. श्रद्धा मनोधर्मः. सः कथं हूयते? इति चेद्, न. मनसा सह भविष्यति. तथापि अरुणान्यायेन धर्ममुख्यत्वम्.

तर्हि कथं प्रश्नोपसंहारौ? परोक्षवादाद् भविष्यति. चमसवत्. "श्रद्धा वा आपः" (तैत्ति.ब्राह्म.3।2।4।1) इति श्रुतेः शुद्धिहेतुत्वसाम्यात्. "चन्द्रमा मनसो जातः" (ऋग्वेद 10।90।13) इति श्रुतिश्च एवम्परा भविष्यति. तस्मात् प्रथमाहुतौ अपाम् अश्रवणाद् न ताभिः सम्परिष्वक्तो गच्छति इति चेद्, न. ता एव आपएव 'श्रद्धा'शब्देन उच्यन्ते. हि युक्तो अयम् अर्थः. यथा कर्मकाण्डे आपः 'श्रद्धा'शब्देन उच्यन्ते, तथा प्रकृतेऽपि. परं न उपचारः, उपपत्तेः.

उपक्रमोपसंहारयोः बलीयस्त्वात्. नतु मध्ये श्रुतेन 'श्रद्धा'शब्देन उपक्रमोपसंहारौ अन्यथाकर्तुं युक्तौ. श्रद्धासहभावः संस्कारद्वारेण संस्कृतेषु भूतेषु सिद्धः. तेन मनःस्थाने आपएव वाच्याः. "चन्द्रमा मनसो जातः"(ऋग्वेद 10।90।13) इतितु भिन्ना सृष्टिः. 'श्रद्धा'प्रयोगस्तु कामनाकृतव्यावृत्त्यर्थः. तत्र फलएव श्रद्धा, न कर्मणि. "यो यच्छ्रद्धः सएव सः"(भग.गीता 17।3) इति श्रद्धायाः आश्रयस्य विषयभावजनकत्वात् कर्तुः कर्मभावाय 'श्रद्धा'प्रयोगः. ततः संस्कृता आपो यजमानरूपा हूयमाना भवन्ति इति सिद्धं भवति. तस्मात् प्रथमेऽपि अपाम् अस्ति श्रवणम्॥5॥

अश्रुतत्वाद् इति चेद् न इष्टादिकारिणां प्रतीतेः॥6॥

स्थितम् एतज्जीवः सम्परिष्वक्तो रंहति इति. तत्र विचार्यते : सर्वे जीवाः सम्परिष्वक्ताः गच्छन्ति आहोस्वित् ज्ञानोपयोगिनः? इति विमर्शः. तत्र पञ्चाहुतिब्राह्मणे न अधिकारिणः श्रुताः. वेदे हि श्रुतानुसारिकल्पना. अतो विशेषस्य अश्रुतत्वात् सर्वेषामेव पञ्चाहुतिप्रकारः इति चेद्, न, इष्टादि-कारिणां प्रतीतेः. साधारणपक्षं दूषयति. कुतः? इष्टादिकारिणां प्रतीतेः. इष्टादिकारिणः प्रतीयन्ते 'श्रद्धा'पदेन देवकर्तृत्वेन च. सोमभावसाम्याच्च*. इष्टादिकारिणां धूममार्गव्युत्पादने सोमभावः उक्तः. अत्रापि

प्रथमाहुतिफलं सोमभावः उच्यते. अतः श्रुतिसाम्यादपि इष्टादिकारिणो रंहन्ति इति सिद्धम्॥6॥

भाक्तं व अनात्मवित्वात् तथाहि दर्शयति॥7॥

किञ्चिद् दूषणं परिहरति. ननु यदि श्रुतिसाम्येन सोमभावाद् इष्टादिकारिणो रंहन्ति इति उच्यते, तदा सोमभावे तेषाम् अनिष्टं श्रूयते, "तद्देवानाम् अन्नं. तं देवा भक्षयन्ति" (छान्दो.उप.5।10।4) इति. समान-श्रुतौ च "आप्यायस्वापक्षीयस्वेत्येवम् एनांस्तत्र भक्षयन्ति"(बृहदा.उप.6।2। 16) इति चन्द्रदृष्टान्तेन ते च भक्ष्यन्ते, ततश्च देवाः स्वान्नं पर्जन्ये अग्नौ कथं जुहुवुः? अतः पञ्चाहुत्यभावः इति आशङ्क्य, परिहरति 'वा'शब्दः. तेषां सोमभावो गौणः. भक्षणं च. प्रकृतेऽपि अङ्गारत्वात् चन्द्रमसः कथम् आहुतिफलं भवेत्? सोमभावस्य भाक्तत्वम् अग्रे निरूपयिष्यामः. इदानिं भक्षणस्य गौणत्वं निरूपयति. अन्नभावे हि मुख्यं भक्षणं भवति. तद् अन्यस्य 1अन्नभावो न उपपद्यते. ब्रह्मज्ञानेतु भवति. "स सर्वं भवति" (बृहदा. उप.3।4।10) "तद्वै तत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे 'अहं मनुरभवं सूर्यश्च' " (बृहदा. उप.1।4।10) इति. प्रकृतेतु तद् न, अनात्मवित्वात्. तथा सति मोक्षएव भवेत्. अतो भक्षणमपि गौणम्. तथाहि. श्रुतिरेव गौणभावं शब्दस्य बोधयति. "अथ यो अन्यां देवताम् उपास्ते" (बृहदा.उप.1।4।10) इत्यत्र यथा 'पशु'शब्दः एवम् अत्रापि भक्षणं सहक्रीडनं सेवकभावः. चन्द्रतुल्यापदेशाय तथावचनम्. तथा सति तेषाम् अमरत्वेन तथा श्रुतिः2 चन्द्रस्य भक्षणन्तु क्षयाद् अनुमीयते श्रुत्या, "प्रथमां पिबते वह्निः" (.........................) इत्यादिरूपया. देवानाम् अभक्षणं भगवदवयवानामेव. अशनानशने तस्याविरुद्धे. आधिभौतिकानां देवानाम् अशनमेव. तस्माद् भक्षणस्य गौणत्वात् सोमभावे न काचित् चिन्ता॥7॥1॥

इति तृतीयाध्याये प्रथमपादे प्रथमं रंहत्यधिकरणम्॥1॥

कृतात्यये अनुशयवान्

## दृष्टस्मृतिभ्यां यथेतम् अनेवं च॥8॥(3।1।2)

प्रथमाहुतिः सफला विचारिता. द्वितीयां विचारयितुम् अधिकरणारम्भः. सोमस्य पर्जन्यहोमे वृष्टित्वम् इति. सोमाद् वृष्टिभावे रूपरसादीनां हीनतया प्रतीयमानत्वाद् यागस्य अवान्तरफलं तत्र भुङ्क्ते इति निश्चितम्. तत्र संशयः किं सर्वमेव अवान्तरफलं तत्र भुङ्क्ते आहोस्विद् अनुशयवान् वृष्टिः भवति? इति.

सद्वासनया अग्रिमजन्मनि सदाचारयुक्तएव स्याद् इति. "आचारहीनं न पुनन्ति वेदाः" (वसि.स्मृ.6।3) इतिबाधोपलब्धेः. अतो विचारः उचितः.

तत्र अवान्तरफलस्य अवशेषे अवान्तरफलत्वबाधाद् ज्ञानौपयिक-शरीरभावादेव सदाचारसिद्धेः प्रयोजनाभावाच्च निरनुशयएव द्रष्टिभावं प्रप्नोति इत्येवं प्राप्ते, उच्यते. कृतात्यये अनुशयवान्, कृतस्य सोमभावस्य अत्यये नाशे सति अनुशयवान्.

अवान्तरफलसाधकलेशसहितएव वृष्टिभावं प्राप्नोति. कुतः? दृष्ट-स्मृतिभ्याम्. दृष्टं तावद् भोगसाधकमूलद्रव्यनाशेऽपि भोगसाधकतादृश-देहवस्त्रादिसहितएव तस्मात् स्थानाद् अपगच्छति. अन्यथा सद्यएव देहपातः स्यात्. अतो यथा लोके सानुशयः, तथा अत्रापि. स्मृतिश्च "यद्यत्र नः स्वर्ग्यसुखावशेषितं स्विष्टस्य दत्तस्य कृतस्य शोभनं, तेनाजनाभे स्मृतिमज्जन्म नः स्याद् वर्षे हरिर्यद् भजतां शं तनोति" (भाग.पुरा.5।20।28) इति देवगाथा. अतो ज्ञानौपयिकजन्मः सानुशयवतएव भवति. अन्यथा पूर्वजन्मस्मृत्यभावे विषयासक्तिः प्रसज्ज्येत.

ननु अनुशयसहकृतएव जीवो न अद्भिः परिष्वक्तो भवेद्, अत आह यथा इतम्. यथागतम्. अन्यथा प्रश्ननिरूपणयोः बाधः स्यात्. तर्हि तावद् अवान्तरफलसाधकसहितः स्याद्, अत आह अनेवं च. एवम्प्रकारयुक्तागमनं नास्ति, भोगस्य जातत्वात्. 'च'काराद् वैराग्यसहितोऽपि. तस्माद् अनुशयवान् भिन्नप्रकाराद्भिः परिष्वक्तो देवकृपासहितो वृष्टिः भवति इति॥8॥

चरणाद् इति चेद् न उपलक्षणार्थेति कार्ष्णाजिनिः॥9॥

किञ्चिद् आशङ्क्य परिहरति. ननु न अत्र उत्तमजन्मार्थम् अनुशयो अपेक्ष्यते, चरणादेव भविष्यति, "तद् य इह रमणीयचरणा अभ्यासो ह यत् ते रमणीयां योनिम् आपद्येरन्" (छान्दो.उप.5।10।7) इत्यादिना यः पूर्वजन्मनि विहिताचारं करोति सः उत्तमं जन्म प्राप्नोति. यस्तु निषिद्धाचरणं करोति सः श्वादियोनिं प्राप्नोति इति "साधुकारी साधुः भवति" (बृहदा.उप.6।4।5) इत्यादिश्रुत्या च प्रतिपाद्यते, प्रकृतेतु तस्य रमणीयचरणस्य चरणादेव तस्य सम्यग् जन्म भविष्यति, किम् अनुशयसहभावेन? इति चेद्, न. चरणश्रुतौ या योनिः उक्ता, सा उपलक्षणार्था, अनेन पूर्वजन्मनि समीचीनं कृतम् इति ज्ञापिका, नतु तस्मिन् जन्मनि समीचीनकरणे नियामिका, अन्यथा ब्राह्मणानां निषिद्धकरणं न स्यात्. तस्माद् अनुशयो अपेक्ष्यते ज्ञानोपयोगार्थम् इति कार्ष्णाजिनिः आचार्यो मन्यते. कार्ष्णाजिनिग्रहणं पञ्चाग्निविद्याया भिन्नप्रकारज्ञापनार्थम्. तस्माद् अस्य स्वमते भिन्नत्वाद् न शङ्का, न च उत्तरम्. नहि पञ्चाग्निविद्यायां पुरुषाद् अन्यभावः सम्भवति. प्रकरणपरिगृहीता श्रुतिः न अन्यत्र न्यायसम्पादिका॥9॥

आनर्थक्यम् इति चेद् न तदपेक्षत्वात्॥10॥

ननु एवं सति चरणश्रुतिः अनर्थिका, ज्ञापनायां प्रयोजनाभावाद्, अतो विधायकत्वं श्रुतेः, इष्टानिष्टफलबोधकश्रुतिवद्, अतः कर्मतारतम्येन फलविधानाद् निष्कामकर्मकर्तुः ज्ञानोपयोगिदेहविधानं भविष्यतीति अनुशय-सहभावो व्यर्थः इति चेद्, न, तदपेक्षत्वात्. धूमादिमार्गस्य तस्याः श्रुतेः अपेक्षत्वात्. काम्येष्टादिकारिणः फलभोगानन्तरम् उत्पत्तौ "सुखानन्तरं दुःखम्" इतिन्यायेन पापस्यैव उपस्थितत्वाद् असमीचीनशरीरप्राप्तिः मा भवतु इति रमणीय अनुष्ठातॄणां रमणीयशरीरप्राप्तिरेव बोध्यते, न न्यायेन असमीचीन-शरीरम् इति. तस्माद् अन्यनिषेधार्थं सार्थकत्वाद् न अनुशयप्रतिषेधिका.

किञ्च, रमणीययोनिः किम् आकस्मिकी सकारणा वा? न आद्या वेदवादिनां, द्वितीये तु "स्वकर्मणा पितृलोकः"(बृहदा.उप.3।5।16) इति वस्वादित्यरूपता च वक्तव्या. "प्रजामनु प्रजायन्ते श्मशानान्तक्रियाकृतः" (भाग.पुरा.3।32।20) इति च. "त्रैविद्या मां सोमपाः"(भग.गीता 9।20) इत्यादिना इन्द्रलोकभोगानन्तरं तथैव पुनर्भवनं च वक्तव्यम्. नच सर्वेषाम् ऐक्यम्, भिन्नरूपत्वात्. तस्मात् कर्मकर्तृवैचित्र्येण श्रुतिस्मृतिभेदाः समर्थयितव्याः, नतु एकम् अपरत्र निविशते, उपरोधप्रसङ्गात्. तथाच प्रकृतेऽपि अनुशयाभावे भक्षण-भवनयोः नियमो न स्यात्. ब्राह्मणादीनामपि अन्ने बलिहरणे श्व-चण्डालयोः भक्षणम्. ब्राह्मणभक्षणेऽपि मलभावे शूकरभक्षणम्. अनुशयस्य नियामकत्वे तुषादिषु अन्नभावएव यावत् समीचीनरेतोभावः. तस्माद् उपलक्षणतैव चरणश्रुतेः युक्ता. तस्माद् अनुशयसहितएव वृष्टिभावं प्राप्नोति इति सिद्धम्॥10॥

सुकृत-दुष्कृते एवेति तु बादरिः॥11॥

फलांशएव अनुशयः इतितु स्वमतम्. कर्म फलञ्च द्वयमेव ईश्वरेच्छया नियतम्. कर्म पुनः भगवत्स्वरूपमेव ब्रह्मवादे. सोऽभिव्यक्तः फलपर्यन्तं तदादिसंयोगः इति स्वमतम्. अन्तसंयोगपक्षम् आह एकदेशित्वज्ञापनाय. सुकृतदुष्कृते एव विहितनिषिद्धकर्मणी अनुशय इति बादरिः आचार्यो मन्यते. तेन मोक्षपर्यन्तम् अनुशयो अनुवर्तिष्यते इति सूत्रफलम्. 'तु'शब्देन निरनुशयपक्षशङ्कैव नास्ति इति उक्तम्. एवं द्वितीयाहुतिः निर्धारिता॥11॥
इति तृतीयाध्याये प्रथमपादे द्वितीयम् अनुशयाधिकरणम्॥2॥

## अनिष्टादिकारिणामपि च श्रुतम्॥12॥ (3।1।3)

तुल्यत्वेन विचारे ऐक्ये वा पञ्चाहुति-धूममार्गयोः सोमभावं गतस्य पुनरावृत्युपसंहारे उपलक्षणेनापि पापाचारवताम् उपसंहारदर्शनात् तेषामपि आहुतिसम्बन्धो धूममार्गश्च प्राप्नोति, तन्निराकरणार्थम् अधिकरणारम्भः.

ननु अनिष्टादिकारिणामपि सोमभावः श्रूयते इष्टादिकारिव्यतिरि-क्तानां "ये वै के च अस्मात् लोकात् प्रयान्ति, चन्द्रमसमेव ते सर्वे गच्छन्ति" (कौषी.उप.1।2) इति कौषीतकिनः समामनन्ति. अत्र च "कपूयां योनिम् आपद्यन्ते"(छान्दो.उप.7।10।7) इति पर्यवसानम्. तेन सर्वे चन्द्रमसं गच्छन्ति.

अयम् आशयः. कर्माकर्मविकर्मेति त्रिविधो कर्मविधायको वेदः.

"अग्निहोत्रं जुहुयात्" (मैत्रा.उप.6।36),

"यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम्"(कौषी.उप.21। 27),

"न हिंस्याद् भूतजातानि" (भाग.पुरा.6।18।47).

ब्राह्मणादीनामपि त्रिविधकरणं सम्भवति. न हि सर्वोऽपि एकान्ततो विहितं वा प्रतिषिद्धं वा करोति. ततो विहितकर्तुरपि त्रयसम्भवाद् ज्ञानाभावेन फलभोगनैयत्यात्

सोमभावानन्तरमेव अकर्मविकर्मभोगो वक्तव्यः. अतएव अविशेषोपसंहारौ तस्मात् सोमभावानन्तरमेव सर्वेषां जन्म इति प्राप्तम्॥12॥

संयमने त्वनुभूयेतरेषाम् आरोहावरोहौ तद्गतिदर्शनात्॥13॥

'तु'शब्दः पक्षं व्यावर्तयति. विहितव्यतिरिक्तकर्मणां('कर्तॄणाम्' इति पुरु.पाठः) संयमने यमसन्निधाने सुखं दुःखं वा अनुभूय आरोहावरोहौ. अनुभवार्थम् आरोहः, अनुभूय अवरोहः इति. कुतः? तद्गतिदर्शनात्. तेषां गतिः विसदृशी दृश्यते. वेदे हि प्रथमं विहिता द्वेधा गतिः, सकामा निष्कामा च इति. सकामा यथाकामम् अनन्तविधा. निष्कामा ज्ञानरहिता द्विविधा, वैदिक-गृह्य-स्मार्तभेदेन. तत्र गृह्य-स्मार्ते यमः. श्रौते सोमभावः. तत्र त्रेताग्निविधानेन "निष्कामानाम् अदम्भानां पुण्यः स्याद्" इति अधिकारिविशेषणाद् विशेषतः सामान्यतश्च प्रायश्चितविधानात्. "यदर्वाचीनम् एनो भ्रूणहत्यायाः तस्मान् मुच्यते"(तैत्ति.आर.2।8) इति. "तरति ब्रह्महत्याम्" (तैत्ति.संहि.5।3।12) इति च सर्वप्रायश्चित्तविधानात्. ब्रह्मानुभवाभावे सोमगतिरेव.

पूर्वजन्मधर्मस्य चित्तशुद्धौ उपयोगः. तदानीन्तनस्य गङ्गास्नानादेः श्रौताङ्गत्वम्. अतः पापस्य अभावात् पुण्यस्य उपक्षीणत्वात् तस्य पञ्चाग्नि-प्रकारएव. ज्ञानोपयोगिजन्मनि पापसंश्लेशाभावोपायम् अग्रे वक्ष्यति. पितृमेध-प्रथमाहुतिमन्त्रस्तु मन्त्रत्वात् चमसवद् न गतिनियामकः.

त्रेताग्निविद्यारहितानां पुण्यपापोपभोगो यमएव."वैवस्वते विविच्यन्ते यमे राजनि ते जनाः, ये चेह सत्येनेच्छन्ते य उ चानृतवादिनः" (तैत्ति.आर. 6।5) इति. यमगतेः पञ्चाग्निविद्यायाश्च एषा व्यवस्था. चित्तशुद्धिभावाभा-वाभ्यां वा अवश्यं काण्डद्वयव्यवस्था. एकस्य एतद् वक्तव्यम्. सकामनिःकाम-भेदो वा. वेदान्तिनामपि पापार्थं यमापेक्षणात् सा गतिः वक्तव्यैव. तस्माद् न सर्वेषां सोमगतिः॥13॥

स्मरन्ति च॥14॥

स्मरन्ति च व्यासादयः. "यमेन पृष्टः तत्राहं देवदेव जगत्पते, पूर्वं त्वम् अशुभं भुङ्क्ष्व उताहो नृपते शुभम्"(भाग.पुरा.10।61। 22) इत्यादि. 'च'काराद् लोकप्रसिद्धिः॥ 14॥

अपि सप्त॥15॥

'च'इति अनुवर्तते. पापोपभोगार्थं यमालयगमनम् अङ्गीकर्तव्यम्. यतः तत्र नरकाः सप्त सन्ति रौरवादयः. सप्तसंख्या संख्याभेदेषु अवरकक्षा. सर्वथानिराकरणाभावाय सप्तग्रहणम्. तस्माद् यमगतिः अस्ति॥15॥

तत्रापि च तद्व्यापाराद् अविरोधः॥16॥

किञ्चिद् आशङ्क्य परिहरति. ननु नरकेषु चित्रगुप्तादयो भिन्नाएव अधिकारिणः सन्ति. तथा सति तृतीयः पक्षः स्यात्. अतः आह तत्र नरकादिषु ये

अधिकारिणः ते यमायत्ताः तत्सेवकाः. अतो यमस्यैव तत्रापि व्यापाराद् न तृतीयपक्षप्राप्तिः. 'च'कारात् सुखदुःखभोगेऽपि तृतीयपक्षएव विरोधः.

अथवा, यमगतेः मन्त्रलिङ्गसिद्धेः पापस्य च पौराणिकत्वे चन्द्रगतिः एकैव स्यादिति विरोधः. तेषां यमसेवकत्वेतु मन्त्रलिङ्गपोषकत्वात् मार्गद्वयसिद्धेः अविरोधः. तस्माद् यमगतिः अस्ति इति सिद्धम्॥16॥

इति तृतीयाध्याये प्रथमपादे तृतीयम् अनिष्टादिकारिणाम् इति अधिकरणम्॥3।

## विद्याकर्मणोरिति तु प्रकृतत्वात्॥17॥ (3।1।4)

साधारणत्वाभावाय पूर्वोक्तार्थसाधकम् अधिकरणम् आरभते. ननु "ये के चास्माद् लोकात् प्रयान्ति1, चन्द्रमसमेव ते सर्वे गच्छन्ति" (कौषी.उप.1।2) इत्यस्याः श्रुतेः का गतिः? पञ्चाग्निविद्याप्रस्तावे वा यमगतिः कुतो न उक्ता? तस्माद् वेदविरोधाद् न तृतीयपक्षसिद्धिः इति आशङ्कां परिहरति 'तु'शब्दः. अत्र वेदान्ते गौणमुख्यफलदेहार्थं2 विद्याकर्मणोरेव हेतुत्वेन निरूपणम्. विद्यया देवयानं, कर्मणा सोमभावः इति. तयोरेव प्रकृतत्वात् कारणत्वात्. तेन कौषीतकिब्राह्मणेऽपि प्रकृतत्वात् कर्मिणएव 'सर्व'शब्देन उक्ताः. अत्रापि न यममार्गः उक्तः. तस्माद् विद्याकर्मणोः मुख्यत्वाद् मार्गद्वयमेव उक्तम्. न एतावता तृतीयबाधः॥17॥

ननु द्वयोः स्तुत्यर्थं यः तृतीयो मार्गः उक्तः, "अथैतयोः पथोर्न कतरेण च न तानि इमानि क्षेत्राण्यसकृदावर्तीनि भूतानि भवन्ति" (छान्दो.उप.5।10। 8) इत्यादिना "जुगुप्सेत" (तत्रैव) इत्यन्तेन तृतीयनिन्दया द्वयोः स्तुतिरिति सएव तृतीयो अस्तु, किं यममार्गेण? इत्यतः आह.

न तृतीये तथोपलब्धेः॥18॥*

न तृतीये मार्गे तथा पुण्य-पापयोः उपभोगः उपलभ्यते. यतः समानब्राह्मणे "कीटः पतङ्गाः यदि दन्दशूकम्" (बृहदा.उप.6।2।16) इति योनौ निर्वृतेः विद्यमानत्वाद् न महत्पापोपभोगः. नापि कीटादिषु महासुखोपभोगः. एकवाक्यता च उभयोः युक्ता. यद्यपि महाराजादि-राजदण्डादिषु तथा उपभोगः सम्भवति, तथापि रम्भादिसम्भोगे नरके च यथा, तथा न सम्भवति. जडेतु पञ्चम्याहुतिः भरतएव हि ईश्वरेच्छया जन्मद्वयम् अधिकम्. "त्रिभिः" (भाग.पुरा.11।2।18) इति वचनात्. "भरतोऽहम्" (भाग.पुरा.5।12।14) इति प्रतीतेश्च. ततः पूर्वम् अस्मरणाद् बाल्यादिवदेव जन्मत्रयम्. तस्माद् "जायस्व" (छान्दो.उप.7।10।8) इत्यादिवैलक्षण्याद् अतिरिक्तो यममार्गः. पञ्चाहुतिनियमाभावस्तु ज्ञानोपयोगिदेहेपि अंशावतरणे पुष्टिमार्गत्वाद् न तत्र दोषः॥18॥

स्मर्यतेऽपि च लोके॥19॥

साधकान्तरम् आह. अपि च लोकेऽपि मूर्च्छादिषु यमलोकगमन-सम्भाषण-पुनरागमनानि स्मर्यन्ते॥19॥

दर्शनाच्च॥20॥

यमपुरुषाः दृश्यन्तेऽपि कैश्चिद् अजामिलप्रभृतिभिः. 'च'कारात् तेषां वाक्यादिश्रवणम्. तस्माद् वैवस्वतमार्गे न किमपि बाधकम् इति सिद्धम्॥20॥
इति तृतीयाध्याये प्रथमपादे चतुर्थं विद्याकर्मणोः इति अधिकरणम्॥4॥

## तृतीयशब्दावरोधः संशोकजस्य॥21॥ (3।1।5)

तृतीयाम् आहुतिं विचारयति तत्र "वृष्टेरन्नं भवति" (छान्दो.उप. 7। 6।2) इति तृतीयाहुतिः सफला. पूर्वद्वयं शब्दैकसमधिगम्यम्. 'वृष्टेरन्नम्' इति साधन-फलयोः प्रत्यक्षत्वाद् न वृष्टिमात्रेण अन्नं भवति बीजव्यतिरेकेण. बीजस्य हि फलम्. न निमित्तमात्रेण तद्भावो वक्तुं शक्यते. तस्माद् असङ्गतं 'वृष्टेरन्नम्' इति आशङ्क्य आह तृतीयशब्दावरोधः. तृतीयाहुतौ शब्देन शब्दसाम्येन कारणभूतस्य जलस्य अवरोधो ग्रहणम्.
"सदेव सोम्येदम् अग्र आसीद्" (छान्दो.उप.6।2।1) इत्यत्र
"तत् तेज ऐक्षत" (छान्दो.उप.8।2।2),
"बहु स्यां प्रजायेय" (छान्दो.उप.8।2।3) इति,
"तदपो असृजत" (छान्दो.उप.6।2।3),
"तस्माद् यत्र क्व च शोचति स्वेदते वा पुरुषः तेजसएव तदध्यापो
जायन्ते" (छान्दो.उप.8।2।3)

इत्यत्र कारणरूपापां निरूपणे शोकजत्वम् अपाम् उक्तम्. अग्रे च "तस्माद् यत्र क्व च वर्षति, तदेव भूयिष्ठम् अन्नं भवति" (छान्दो.उप.6।2।4) इति. अतः पञ्चाग्निविद्यायामपि देवहोमात् कारणभूतैव वृष्टिः जातेति न अत्र बीजान्तरापेक्षा. 'शोक'पदेन "यदश्रवशीयत तद् रजतं हिरण्यम् अभवद्" (तैत्ति.संहि.1।5।1) इति सहायः सूचितः. यद्यपि तत्र 'अन्न'शब्देन पृथिवी, तथापि अत्र पृथिव्या अग्निसमिद्रूपत्वाद् अन्नमेव. तस्मात् कारणशक्तियुक्तायाः वृष्टेः अन्नं भवतीति न कापि अनुपपत्तिः॥21॥
साभा व्यापत्तिरुपपत्तेः॥22॥

किञ्चिद् आशङ्क्य परिहरति. ननु कारणजलरूपवृष्टिः अत्र वक्तुं न शक्यते, यतः समानधूममार्गश्रुतौ वृष्टेः अन्नभावे ऐक्ये वा "तस्मिन् यावत् सम्पातम् उषित्वा अथैतमेव अध्वानं पुनर्निवर्तते, यथेतम् आकाशम्"(छान्दो. उप.5।10।5) इत्यादिना "तिलमाषा"(तत्रैव 5।10।6) इति "जायन्ते" (तत्रैव 5।10।6) इत्यन्तेन. तत्र 'यथेतम्' इति आकाशएव. "आकाशात् चन्द्रमसम्"(तत्रैव 5।10।4) इति पूर्वम् उक्तत्वाद् आकाशस्य मार्गतैव. "वायुर्भूत्वा धूमो भवति"(तत्रैव 5।10।5) इत्यादिषु तत्तद्भावः श्रूयते. ते च विकृताः, तदनन्तरभावित्वात्. वृष्टिरपि विकृतैव. तस्माद् न कारणत्वम् इति आशङ्क्य परिहरति. सा वाय्वादिरूपापत्तिः आभा व्यापत्तिरेव. वायुवद् आभा आभानम्. मध्ये *वायुमण्डलेन आगच्छन्ती आहुतिः 'वायुभवन'शब्देन उच्यते, आकृतेरेव पदार्थत्वात्. 'व्यापत्ति'शब्देन च

तेजोभावापन्नस्य जलभावापत्तौ कान्तिनाशाद् नाशइव इति द्योतयति. कुतः? उपपत्तेः. तथैव उपपद्यते चित्रतुरगादिषु. विकारस्य विकारान्तरापत्तौ इयमेव व्यवस्था. उपासनायां न तदपि. नच "भूत्वा" (छान्दो.उप.5।10।5) श्रुतेः बाधः. प्रतिनियतपदार्था हि ते. भवनावरोहाभ्यामेव तथावचनात्. अन्यस्य अन्यभावं वदन्ती श्रुतिरेव गौणत्वं वदति. कारणांशभावव्यतिरिक्तस्थले तथैव प्रतीतेः. तस्मात् तदाकृतिमात्रेण न स्वरूपान्यथाभावः॥22॥

नातिचिरेण विशेषात्॥23॥

उपपत्यन्तरम् आह. तद्रूपता च नातिचिरेण न बहुकालं तद्रूपता. कुतः? विशेषात्. अन्नभावापन्नस्यैव बहुकालश्रवणात्. "अतो वै खलु दुर्निष्प्रपतरम्" (छान्दो.उप.5।10।6) इति. प्रापतरं प्रपतरं वा. वर्णलोपः छान्दसः. अतः तृतीयाहुतौ न चिरेण इति आयाति. बहुकालस्थितौ हि तद्रूपता. कारणवशाद् देवानां मनुष्यभाववत्. भिन्नपक्षे न कोऽपि दोषः. ऐक्यपक्षेऽपि ज्ञानवतो गृहस्थस्य दुर्लभत्वाद् एवं वचनम्.

तस्माद् वृष्टेः अन्नं भवति इति सिद्धम्॥23॥

इति तृतीयाध्याये प्रथमपादे पञ्चमं तृतीयशब्दावरोधाधिकरणम्॥5॥

## अन्याधिष्ठिते अपूर्ववदभिलापात्॥24॥ (3।1।6)

चतुर्थी आहुतिः विचार्यते. ननु "संसर्गजैः कर्मदोषैः याति स्थावरतां नरः"(मनुस्मृ.12।9) इति कथम् अस्य अन्नत्वम्? अपूर्वान्नत्वेऽपि कण्डन-पाकादिषु क्लेशेन जीवस्य अपगमात् कथं रेतोभावः? चर्वणौदर्यपाकस्तु आवश्यकएव. नच जीवस्य जडभावः, मर्यादाभङ्गप्रसङ्गात्, तस्मात् कथम् अन्नस्य रेतोभावः? इति आशङ्क्य परिहरति. अन्याधिष्ठिते वृष्टेः अन्नभावसमयएव अन्यैः जीवैः अधिष्ठितो व्रीह्यादिः तस्मिन् न पूर्ववत् तद्भावापत्तिः, अतिथिवत्. पूर्ववैलक्षण्येन वा. कुतः? अभिलापात्. "व्रीहियवा ओषधिवनस्पतयः तिलमाषाः"(छान्दो. उप.7।10।6) इति पूर्ववत् तत्तद्भावमात्रं न वदति, किन्तु जगति स्थितव्रीह्यादिभावएव अभिलप्यते. तथा सति यथा अन्येषु व्रीह्यादिषु तदधिष्ठातृदेवतया नियुक्ता जीवाः तान् आत्मत्वेन अभिमन्यन्ते एवम् अत्रापीति न कोऽपि दोषः. *अधिष्ठाने हि वेदना, मरणानन्तरं कृमिभावस्य दृष्टत्वात्. तस्माद् अन्नस्य रेतोभावो युक्तः॥24॥

अशुद्धम् इति चेन्न शब्दात्॥25॥

किञ्चिद् आशङ्क्य परिहरति. ननु अन्याधिष्ठाने अङ्गीक्रियमाणे यातनाजीवानाम् अशुद्धत्वाद् अशुद्धम् अन्नं स्यात्. तथाच कथं योग्यदेहः? इति चेद्, न, शब्दात्. "देवा अन्नं जुह्वति, तस्या आहुते रेतः सम्भवति" (छान्दो. उप.5।7।2) इति देवैः आहुतिरूपेण होमवचनात् शुद्धत्वम्. अन्यस्य हि संस्कारेणैव शुद्धिः. अन्यथा यावज्जीवं का गतिः स्यात्? तस्मात् 'संस्कार'-शब्दात् शुद्धमेव अन्नम्॥25॥

इति तृतीयाध्याये प्रथमपादे षष्ठम् अन्याधिष्ठिते इति अधिकरणम्॥6॥

## रेतःसिग्योगो अथ॥26॥ (3।1।7)

पञ्चमाहुतिं विचारयति. ननु कथं पुरुषे अन्नहोमाद् रेतोभावः? बाल्य-कौमार-वार्धकेषु व्यभिचारात्. तारुण्येऽपि न हि सर्वम् अन्नं रेतो भवति. जातमपि न नियमेन योनौ सिच्यते. नापि देवापेक्षा, पुरुषप्रयत्नस्य विद्यमानत्वाद् इति आशङ्क्य परिहरति रेतःसिग्योगः. 'पुरुष'शब्देन पौरुषधर्मवान् उच्यते. पौरुषं च देशकालसंविधानेन मन्त्रवद् रेतःसेकसामर्थ्यम्. नहि एतत् सर्वजनीनं सार्वत्रिकं वा, तदर्थं देवापेक्षा. तथा सति न कोऽपि व्यभिचारः. कथं 'पुरुष'-शब्दमात्रेण च ज्ञायते? तत्र आह अथ आनन्तर्यात्. शरीरार्थमेव देवैः तत्र-तत्र होमः कृतः. तत् कथं पञ्चामाहुतावेव अन्यथा भवेत्? तस्माद् आनन्तर्यात् पुरुषाहुतिः न अन्नं, रेतःसिग्योगः. 'योग'शब्देन अत्रापि अन्याधिष्ठानेन रेतःसिग्योगाभावः॥26॥

इति तृतीयाध्याये प्रथमपादे सप्तमं रेतःसिग्योगाधिकरणम्॥7॥

## योनेः शरीरम्॥27॥ (3।1।8)

हूयमानं निरूप्य फलं निरूपयति. "तस्या आहुतेः गर्भः सम्भवति" (छान्दो.उप.7।8।2) इति उच्यते.

तत्र सन्देहः. योनौ अन्तःस्थितमेव फलं, बहिः निर्गतं वा? इति. तत्र 'गर्भ'शब्देन अन्तःस्थितएव. शरीरपरत्वे(छान्दो.उप.6।8।2)श्रुतिबाधः स्यात्. (तत्रैव6।9।1) उपसंहारोऽपि अग्रे कर्तव्याभावाद् उपपद्यते. ततश्च षण्मासानन्तरं गर्भे ज्ञानसम्भवाद् जननानन्तरं न गुरूपसत्यादिः कर्तव्यम् इति आशङ्क्य परिहरति. योनेः निर्गतं शरीरं 'गर्भ'शब्देन उच्यते, अग्नेः उत्थितस्यैव फलरूपत्वात्. मध्यभावस्य अप्रयोजकत्वात्. मातृपरिपाल्यत्वाय 'गर्भ'वचनम्. कललादिभावे पुरुषवचनत्वाभावाद् उपसंहारानुपपत्तिश्च. 'शरीर'शब्देन वैराग्यादियुक्तः सूचितः नतु स्वयं तदभिमानेन जातः इति. तस्माद् योग्यदेहः साधनसहितो ब्रह्मज्ञानार्थं निरूपितः॥27॥

इति तृतीयाध्याये प्रथमपादे अष्टमं योनेः शरीरम् इति अधिकरणम्॥8॥

इति श्रीवेदव्यासमतवर्ति-श्रीवल्भाचार्य-विरचिते श्रीमद्ब्रह्मसूत्राणुभाष्ये तृतीयाध्यास्य प्रथमः पादः॥3॥1॥

## *तृतीयो अध्यायः द्वितीयः पादः*

पूर्वपादे अधिकारियोग्यदेहो निरूपितः.द्वितीये जीवस्य मुक्तियोग्यता निरूप्यते. तत्र प्रथमं स्वप्नं निरूपयति. स्वप्नस्य सत्यत्वे तत्कृतगुणदोषसम्बन्धो जीवस्य भवेत्. ततश्च निरूपिता शुद्धिः व्यर्था स्यात्. अतः स्वप्नस्य मिथ्यात्वं प्रदर्शयितुम् अधिकरणारम्भः.

## सन्ध्ये सृष्टिराह हि॥1॥ (3।2।1)

तत्र पूर्वपक्षम् आह. सन्ध्ये स्वप्ने सृष्टिः आह "तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवतः इदं च परलोकस्थानं च सन्ध्यं तृतीयं स्वप्नस्थानम्" (बृहदा. उप.4।3।9) इति उपक्रम्य, "न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजत"(तत्रैव 4।3।10) इत्यादिना सृष्टिः आह. सन्ध्ये स्थाने सृष्टिः अस्ति. यतः श्रुतिः स्वयमेव आह. युक्तश्च अयम् अर्थः.
यथा श्रुतिः वदति तथैव स्वप्ने दृश्यते. देवादिवाक्यानां प्रबोधेऽपि बाधकाभावात्.
नच इयमेव सृष्टिः तत्र दृश्यते. "न तत्र रथाः" (तत्रैव 6।3।10) इत्यादिना निषेधात्.
श्रुतिवादिनां श्रुतिरेव प्रमाणम्, किं पुनः अनुभवसंवादिनी तस्मात् स्वप्ने सृष्टिः अस्ति॥1॥
निर्मातारं चैके पुत्रादयश्च॥2॥

काठके चतुर्थवल्ल्यां श्रूयते. "य एष सुप्तेषु जागर्ति कामं-कामं पुरुषो निर्मिमाणः. तदेव शुक्रं तद् ब्रह्म तदेवामृतम् उच्यते" (कठोप.2।2।8) इति निर्मातारम् एके वदन्ति. यद्यपि "सुषुप्त्युत्क्रान्त्योर् भेदेन" (ब्रह्मसू.1।3। 42) इत्यत्र "न तत्र रथा" (बृहदा.उप.6।3।10) इत्यपि ब्रह्मप्रकरणं, तथापि नियतधर्मपक्षे जीवएव कर्ता इति प्रतिभाति. तदर्थं निःसन्दिग्धं वचनम् उदाहरन्ति. भगवन्निर्मितत्वात् स्वप्नस्थस्यापि सत्यत्वम्. नहि कर्तुः स्वापो अस्ति येन भ्रमः स्यात्, "जागर्ति" (कठोप.1।1।23) इति वचनात्. इच्छापूर्वकं च सर्वं सृजति. "शतायुषः पुत्रपौत्रान्" (कठोप.1।1।23) इति कामविषयाः पुत्रादयः उक्ताः. ते च निर्मिताः परलोकसाधकाइति लोकत्रयकल्पना. 'च'कारद्वयेन कार्यकारणगताः सर्वे धर्मा उक्ताः. तस्मात् श्रुत्युपपत्तिभ्यां स्वप्नप्रपञ्चस्य सिद्धत्वात् तत्कृतगुणदोषसम्बन्धे पूर्वोक्तदेह-निर्माणं व्यर्थम् इत्येवं प्राप्तम्॥2॥
मायामात्रं तु कात्स्न्र्येन अनभिव्यक्तस्वरूपत्वात्॥3॥

'तु'शब्दः पक्षं व्यावर्तयति. स्वप्नसृष्टिः मायामात्रम्. तत्र हेतुः कात्स्न्र्येन अनभिव्यक्तस्वरूपत्वात्. कृत्स्नत्वेन यस्य यादृशं स्वरूपं देशकाल-वस्तुसापेक्षं तथाभिव्यक्तिः कात्स्न्र्येन अभिव्यक्तिः तदभावात्. अयम् आशयः. श्रुतिः सृष्टिमेव आह, न तस्य सत्यत्वमपि. यथा
"ऐतदात्म्यम् इदं सर्वं तत् सत्यं" (छान्दो.उप.6।8।7) इति
"आत्मानं स्वयम् अकुरुत" (तैत्ति.उप.2।7)
"तत् सत्यम् इत्याचक्षते" (तैत्ति.उप.2।6)
"कथम् असतः सज्जायेत" (छान्दो.उप.6।2।2)

इत्यादिश्रुतिसहस्रेभ्यो अस्य सत्यत्वं प्रतीयते, न एवं स्वप्नप्रपञ्चस्य श्रुतिः आह, सत्यप्रयोजनाभावाच्च. स्वमात्रविहारस्तु महामायावित्वात् माययापि सिध्यति. नापि भिन्नः प्रपञ्चः, जीवस्य एकत्वात्. "अविद्यया मन्यते" (बृहदा.उप.6।3।20) इतिवचनाद् न तत्सुख-दुःख-भोगार्थमपि सत्यत्वम् अङ्गीकर्तव्यम्. स्थानद्वयप्रतिज्ञा च विरुद्ध्येत. जीवतो मृतांश्च पश्यति इति लोकद्वयदर्शनम्. अतो लोकद्वयप्रतिच्छायरूपत्वात् मायया क्रीडायाम् अन्यानुरोधाभावेन अतिसुखत्वाद् भगवत्कृतमात्रवाचकत्वाच्च श्रुतेः अतिरिक्त-कल्पनायां प्रमाणाभावाद् ज्योतिःशास्त्रनियमाभावाच्च मायामात्रमेव स्वप्नइति न तत्कृतगुणदोषसम्बन्धः. दीक्षितस्य अन्नभोजनादिप्रायश्चित्तन्तु भगवत्क्रीडा-यामपि प्रतिच्छायत्वात् क्रियते, तदानीं कर्तृत्वस्य आरोपात्. अन्यदा कर्तृत्वस्य अशास्त्रत्वाद् न धर्माधर्मजनकत्वम्. देवताज्ञादिस्तु जीवब्रह्मणोः विद्यमानत्वाद् युक्ता. अलौकिकज्ञाने हि प्रतिच्छायत्वात् संवादः. क्वचिद् भगवदावेशे ईषत् संवादोऽपि. तस्मात् स्वतन्त्रसत्यतायां प्रमाणाभावात् मायामात्रं स्वप्नप्रपञ्चः इति सिद्धम्॥3॥

ननु तर्हि जीवसाक्षिकम् एकदेशेन किमिति सृजति? तत्र आह

सूचकश्च हि श्रुतेराचक्षते च तद्विदः॥4॥

सूचकः शुभाशुभफलसूचको भवति स्वप्नः. 'च'कारात् क्वचिद् आज्ञाविशेषदानम्, कलिकालादेः प्रत्यक्षे बाधकत्वात्. युक्तश्च अयम् अर्थः. प्रातः सूचकफलस्यैव दृष्टत्वात्, नतु स्वप्नपदार्थस्य. सूचकत्वे प्रमाणम् आह "यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति, समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने" (छान्दो.उप.5।2।9) इत्यादिश्रुतेः. किञ्च, आचक्षते च तद्विदः. स्वप्नाध्यायविदः तथैव आचक्षते. "आरोहणं गो-वृष-कुञ्जराणाम्" इत्यादिना. तस्मात् सूचनार्थं जीवप्रदर्शनम् इति॥4॥

पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्ध-विपर्ययौ॥5॥

किञ्चिद् आशङ्क्य परिहरति. ननु जीवाय भगवान् सृष्टिं करोति, प्रदर्शयति च स्वस्य सर्वलीलाम्, अंशश्च अयं, कथम् अस्य दुःखित्वम्? इति आशङ्क्य परिहरति 'तु'शब्दः. अस्य जीवस्य ऐश्वर्यादि तिरोहितम्. तत्र हेतुः पराभिध्यानात्. परस्य भगवतो अभितो ध्यानं स्वस्य एतस्य च सर्वतो भोगेच्छा, तस्मात्. ईश्वरेच्छया जीवस्य भगवद्धर्मतिरोभावः. ऐश्वर्य-तिरोभावात् दीनत्वं पराधीनत्वम्. वीर्यतिरोभावात् सर्वदुःखसहनम्. यशः तिरोभावात् सर्वहीनत्वम्. श्रीतिरोभावाद् जन्मादिसर्वापद्विषयत्वम्. ज्ञानतिरोभावाद् देहादिषु अहम्बुद्धिः सर्वविपरीतज्ञानं च अपस्मारसहितस्येव. वैराग्यतिरोभावाद् विषयासक्तिः. बन्धः चर्तुणां कार्यो, विपर्ययो द्वयोः. तिरोभावादेव एवं, न अन्यथा. युक्तो अयम् अर्थः, एकस्य एकांशप्राकट्येऽपि तथाभावात्. आनन्दांशस्तु पूर्वमेव तिरोहितः येन जीवभावः. अतएव काममयः, अकामरूपत्वाद् आनन्दस्य. निद्रा च सुतरां तिरोभावकर्त्री भगवच्छक्तिः. अतो अस्मिन् प्रस्तावे जीवस्य धर्मतिरोभावः उक्तः. अन्यथा

भगवतः ऐश्वर्यादिलीला निर्विषया स्यात्. तस्माद् न जीवस्वरूप-पर्यालोचनया किञ्चिद् आशङ्कनीयम्॥5॥

देहयोगाद् वा सोऽपि॥6॥

इश्वरेच्छया ऐश्वर्यादितिरोभावं स्वमते निरूप्य, मतान्तरेणापि नियत-धर्मवादेन निरूपयति देहयोगाद् वा. देहसम्बन्धादेव अस्य सर्वतिरोभावः विपर्ययो वा. 'अपि'शब्दाद् अन्यत्. अस्मिन् पक्षे देहवियोगएव पुनः ऐश्वर्यादिप्राप्तिः. पूर्वस्मिन् कल्पे विद्यमानेऽपि इति विशेषः, नतु ईश्वरेच्छया विकल्पः.

कश्चित् 'पर'शब्देन देहादिम् आह. तदा अभिध्यान-योगयोः आकस्मिकता स्यात्. "सर्वस्य वशी सर्वस्येशानः" (बृहदा.उप.4।4।22) इति विरोधश्च.

कश्चित्तु "तस्याभिध्यानात् तृतीयं देहभेदः" (श्वेता.उप.1।11) इति श्रुत्यनुरोधेन जीवकर्तृकाभिध्यानं मत्वा, अतिरोहितम् इति कल्पयति. 'विपर्यय'-शब्देन च मोक्षम्. बह्वध्याहारेण च सूत्रद्वयं योजयति.

तद् ब्रह्मवादापरिज्ञानाद् असङ्गते* साधनोपदेशस्य भ्रान्तोक्तमिति उपेक्ष्यम्. निद्रायाः विवेकज्ञानाभावावसरत्वाद् यथाव्याख्यातएव अर्थः॥6॥

इति तृतीयाध्याये द्वितीयपादे प्रथमं सन्ध्याधिकरणम्॥1॥

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च॥7॥ (3।2।2)

प्रसङ्गाद् जीवस्य अज्ञानं निरूप्य सुषुप्तौ केवलम् अज्ञानं निरूपयितुं स्थान-स्वप्नाभावौ निरूपयति. एवं श्रूयते. नाडीः अनुक्रम्य "तासु तदा भवति यदा सुप्तः स्वप्नं न कञ्चन पश्यति. अथ अस्मिन् प्राणएव एकधा भवति" (कौषी. उप.4।19) इति. तथा "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद न आन्तरम्" (बृहदा.उप.4।3।21) इति.

तत्र संशयः : स्वप्नवत् प्रपञ्चसृष्टिं मायिकीमपि भगवान् करोति नवा? इति संशयः.

तत्र "य एष सुप्तेषु जागर्ति" (कठोप.2।5।8) इत्यत्र जीवस्वापमात्रे भगवत्सृष्टेः उक्तत्वात् "स्वप्नं न कञ्चन पश्यति" (कौषी.उप.4।19) इत्यत्रापि दर्शनमात्रनिषेधाद् "न बाह्यं किञ्चन वेद नान्तरं" (बृहदा.उप. 4।3।21) इति च जागरण-स्वप्नप्रपञ्चयोः अविशेषेण अदर्शनकथनात्, सुषुप्तावपि प्रपञ्चनिर्माणम् अस्ति इति अवगन्तव्यम्. ततश्च कस्यामपि अवस्थायां प्रपञ्चव्यतिरेकाभावात् मुक्तावपि स्यात्. स्वाप्ययसम्पत्योः अज्ञानमात्रविशेषात्. "सति सम्पद्य न विदुः सति सम्पद्यामहे" (छान्दो.उप.6 ।9।2) इति. तस्माद् बाह्यसत्सम्पदोः विद्यमानयोरपि यथाज्ञानाभावाद् अग्रहणम्, एवं प्रपञ्चस्यापि इत्येवं प्राप्ते, उच्यते.

तदभावो नाडीषु. तस्य स्वप्नस्य अभावो नाडीषु. तथा आत्मनि च. कुतः? तच्छ्रुतेः. प्रपञ्चाभावश्रुतेः. कामनया हि प्रपञ्चः. सुषुप्तावस्थायाः अकामरूपत्वश्रुतेः. "तद्वा अस्य एतदात्मकामम् आप्तकामम् अकामं रूपम्" (बृहदा.उप.4।3।21) इति. नाडीषु

आत्मनि च इति ग्रहणात् सुषुप्तिः द्विविधा इति सूचयति. तथा हि. “हिता नाम नाड्यः” (तत्रैव 4।3।20) पुरीतत्यन्ता हृदयदेशाद् बाह्याः, आभ्यन्तरः परमात्मा, हृदयदेशस्तु जीवस्य. इन्द्रियाणां च सएव देशः. तत्र निद्रया भगवच्छक्त्या बहिः दृष्ट्याच्छादने भगवल्लीलायां तां पश्यति. तत्रापि आच्छादने गाढसुप्तो ज्ञानरहितः क्रियाशक्त्या अन्तर्भगवन्तं वा प्रविशति. बहिः नाडीषु वा सामायाति. अतएव बृहदारण्यकषष्ठे “यत्र सुप्तो न कञ्चन कामं कामयते”(बृहदा.उप.4।3।19) इति वारद्वयम् आह. “ता वा अस्यैता हिता नाम नाड्यः”(बृहदा.उप.4।3।20) “तद् वा अस्यैतद् आत्मकामम्”(बृहदा.उप.4।3।21) इतिभेदेन. सुषुप्तिस्तु उभयत्र, ज्ञानशक्तेः सर्वथातिरोधानात्. तस्मात् सुषुप्तौ न प्रपञ्चसृष्टिः॥7॥

इति तृतीयाध्याये द्वितीयपादे द्वितीयं तदभावो नाडीषु इति अधिकरणम्॥2॥

प्रबोधे सन्देहः. “प्रतीयोन्याद्रवति बुद्धान्तायैव”(बृहदा.उप.4।3। 15) इति जीवसमानधर्मब्रह्मप्रकरणे निरूपितम्. ततो नाडीभ्यः पुनः हृदयदेशं गत्वा, भगवतो वा समागत्य, जागर्ति इति आहोस्विद् यत्र स्थितः ततएव जागर्ति? इति. तत्र श्रुत्यनुरोधाद् हृदयदेशम् आगत्य जागर्ति इत्येवं प्राप्ते, उच्यते.

## अतः प्रबोधो अस्मात्॥8॥ (3।2।3)

अतो नाडीभ्यएव प्रबोधः. गर्तपतितस्य प्रबोधे हि ततो गमनम्. प्रतियोन्याद्रवणन्तु भगवतः इति. किञ्च प्रबोधो अस्मात्. अस्माद् आत्मनः सकाशादेव प्रबोधः. प्रिययेव सम्परिष्वक्तस्य बोधाभावे कथम् आगमनम्? अतएव “सम्परिष्वक्तो” (बृहदा.उप.4।3।21) निबिडनिद्रः. तस्माद् यत्रैव तिष्ठति ततएव प्रबोधः इति सिद्धम्॥8॥

सएव तु कर्मानुस्मृतिशब्दविधिभ्यः॥9॥

किञ्चिद् आशङ्क्य परिहरति. ननु प्रिययेव प्राज्ञेन आत्मना परिष्वक्तस्य ब्रह्मलोकं गतस्य प्रबोधेन ज्ञाने मुक्तएव भवेद्, नतु पुनः आगच्छेत्, अतो भगवदिच्छया देहनिर्वाहाय तत्स्थाने नियुक्तो अन्यएव जीवः समायातु, अन्यतः प्रबोधेतु सएव, व्यवहारस्तु तावता सेत्स्यति, मुक्त्यर्थं प्रयत्नस्तु न कर्तव्यः इति आशङ्क्य, परिहरति ‘तु’शब्दः.

अस्मादपि प्रबोधे सएव. कुतः? कर्मानुस्मृतिशब्दविधिभ्यः. चत्वारो हेतवः. लौकिक-वैदिकयोः ज्ञानकर्मभेदात्. तत्र लौकिके कर्मणि सामिकृत-कर्मणः शेषसमापनात्. न हि कश्चिदपि सुषुप्तप्रतिबुद्धः सामिकृतं न समापयति इति क्वचित् सिद्धम्. तथा अनुस्मृतिः. नहि पूर्वदृष्टं न स्मरति इति क्वचित् सिद्धम्. शब्दाश्च

“पुण्यः पुण्येन कर्मणा भवति, पापः पापेन” (बृहदा.उप.4।4।5)
“क्वैष तदाभूत्, कुत एतदागात्” (तत्रैव 2।1।16) इति, तथा
“सति सम्पद्य” (छान्दो.उप.8।9।2) इत्यादयश्च. विधयश्च
“श्वोभूते ब्रह्माणं वृणीते” (आप.श्रौ.सू.4।4।1)

“श्वोभूते शेषं समाप्नुयात्” (तत्रैव 15।2।3)
“एकएव यजेत” (तैत्ति.संहि.7।2।10।3)
“द्वादश रात्रीर्दीक्षितः स्याद्”(तैत्ति.संहि.7।2।10।3) इत्यादि,
“यः कामयेत वीरो म आजायेत” (तैत्ति.ब्राह्म.2।2।3।5) इत्यादयः.
भगवतैव मर्यादारक्षार्थं तथाकरणात्. पूर्वपक्षयुक्तयोः दुर्बलाः. तस्मात् सएव प्रतिबुध्यते॥9॥

किञ्चिद् आशङ्क्य परिहरति. ननु यत्र कर्मानुस्मृतयो न सन्ति, तत्र अन्यो भविष्यति, क्वचित् मूर्च्छादिविशेषे सर्वस्मृतिनाशेन मुग्धभावदर्शनात्. तत्र यथा लौकिकवैदिकव्यवहाराः तथा अन्यत्रापि भविष्यन्ति. अनुस्मरणादयश्च बुद्धिवृत्तयः. गङ्गाप्रवाहजलस्य गङ्गावद् यएव चिदंशः तत्र आयाति सएव तथा भवतु; किं सएव इति निर्बन्धेन? इति आशङ्क्य परिहरति.

मुग्धे अर्धसम्पत्तिः परिशेषात्॥10॥

मुग्धे मुग्धभावे अर्धसम्पत्तिरेव, न सर्वा. न हि मुग्धस्य यज्ञादौ अधिकारो अस्ति. पूर्वप्रवृत्तानि तु जीवनाधिकारात् क्रियन्ते. लौकिक-व्यवहारोऽपि न अपूर्वः सिध्यति. पूर्वोक्तहेतुसद्भावेतु न कोऽपि दोषः. अतो मुग्धे अर्धसम्पत्तिः पूर्वैव न उत्तरा. कुतः एतत्? परिशेषात्. सएव वा न वा इति निश्चयप्रमाणानाम् अभावाद् अर्थात् सन्देहो अवशिष्यते. तस्मात् सन्देहात् मुग्धे अर्धप्रतिपत्तिः.

न तत्र प्राणायनविघातकृता मूर्च्छा विचार्यते, तस्याः प्राणधर्मत्वात्, यथा बाल्यं शरीरधर्मः. व्यर्थश्च विचारः. जीवावस्थाएव हि विचार्यन्ते. केवलसाक्षिवादस्तु न ब्रह्मवादः. तस्माद् एकएव जीवः स्वप्नादिदोषसम्बन्ध-रहितः तादृशजन्मयुक्तो भगवज्ज्ञानरहितो ज्ञानाधिकारी इति सिद्धम्॥10॥

इति तृतीयाध्याये द्वितीयपादे तृतीयम् अतःप्रबोधः इति अधिकरणम्॥3॥

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि॥11॥ (3।2।4)

इदानीं विषयनिर्धारार्थं ब्रह्मस्वरूपं विचार्यते. तत्र प्रथमम् अन्योन्य-विरुद्धवाक्यानां निर्णयः क्रियते. तदर्थम् एतावत् सिद्धम्. समन्वयाविरोधाभ्याम् एकमेव ब्रह्म प्रतिपाद्यते इति. तत्र यथा कार्यविरोधः परिहृतः, एवं ब्रह्मधर्म-विरोधोऽपि परिहरणीयः. अन्यथा अबोधकता स्यात्. तत्र स्वगतधर्माणाम् अविरुद्धानाम् अग्रिमपादे विचारः. जड-जीवधर्मत्वेन प्रतीतानाम् अत्र विचारः क्रियते. तत्र क्वचिद् जडजीवधर्माः भगवति बोध्यन्ते, क्वचिद् निषिध्यन्ते. यथा “सर्वकर्मा सर्वकामः” (छान्दो.उप.3।14।4).

नच एते जीवधर्माएव न भवन्ति इति वाच्यम्, उच्चावचकर्मणां कामानां च जीवगतत्वप्रतीतेः. “नेतरोऽनुपपत्तेः” (ब्रह्मसू.1।1।15) इति सर्वत्र वैलक्षण्यस्य उक्तत्वात्. कार्यविशेषधर्माणां कारणे वक्तुम् अशक्यत्वात्. नच कारणधर्माएव सर्वे कार्ये अंशे वा

प्रतीयन्ते इति वाच्यम्. "अस्थूलमनणु" (बृहदा.उप.3।8।8) इत्यादिवाक्यैः प्रापञ्चिकसर्वधर्मवैलक्षण्यस्य उक्तत्वात्.

अत्र केचिद् अविरोधम् एवम् आहुः : सर्वत्र कारणत्वाद् भगवान् अस्ति. ततश्च अस्थूले अस्थूलः, अनणावनणुः, उच्चावचकर्तरि उच्चावचकर्ता, उच्चावचकामे उच्चावचकामः, पृथिव्यां सर्वगन्धः, जलादौ अगन्धः. एवं रसादिषु. एवं स्थानतः परस्य उभयलिङ्गम् उपपद्यते.

अथवा, कारणएव रूपम् अरूपञ्च अवच्छेदभेदेन अचिन्त्यसामर्थ्याद् वा. अन्यथा असतः सज्जननप्रसङ्गः इति 'अपि'ना संगृहीतः इति.

एतद् उभयमपि न. कुतः? सर्वत्र हि. सर्वत्र एतादृशं रूपं भगवतः उपदिश्यते. हि युक्तो अयम् अर्थः. भगवत्स्वरूपप्रतिपादकानि हि एतानि वाक्यानि, नतु अनुवादकानि, वैयर्थ्यापत्तेः.

अचिन्त्यत्वे ज्ञानानुदयः. "तमेव विदित्वा अतिमृत्युमेति" (श्वेता. उप.3।8) "भक्त्या माम् अभिजानाति यावान् यश्चास्मि यादृशः, ततो मां तत्वतो ज्ञात्वा विशते तदनन्तरम्" (भग.गीता 18।55) इति ज्ञानानन्तरमेव सायुज्यप्राप्तेः. नच "यस्यामतं तस्य मतं मतं यस्य न वेद सः, अविज्ञातं विजानतां विज्ञातम् अविजानताम्" (केनोप.2।11) इति वाच्यं, शास्त्रानारम्भप्रसङ्गात्.

अयं च विरोधः परिहरणीयः. सर्वेहि विरोधा अत्र चिन्त्यन्ते. नापि तत्तदुपादानभूतप्रदेशविशेषेण अविरोधः. अनुवादकत्वेन वैयर्थ्यापत्तेः. नच भगवति भेदो अस्ति. प्रत्यारम्भम् "एकमेवाद्धितीयम्"(छान्दो.उप.8।21) इति वचनात्. अल्पकल्पनायामपि श्रुतिविरोधः सिद्धः. श्रुत्यविरोधार्थमेव हि प्रवृत्तेः. तस्माद् न मतान्तरानुसारेण जडजीवधर्माणां सत्त्वासत्त्वे परिहर्तुं शक्ये॥11॥

न भेदाद् इति चेद् न प्रत्येकम् अतद्वचनात्॥12॥

प्रकारान्तरेण समाधानम् आशङ्क्य परिहरति. न भवदुक्तो विरोधः सम्भवति. भेदात् कारणकार्येषु सर्वत्र भेदाङ्गीकारात्. प्रपञ्चविलक्षणं ब्रह्म भिन्नम्. प्रपञ्चधर्मवद् ब्रह्म भिन्नम्. तथा अज्ञातं ज्ञातञ्च. एकस्य भेदस्य अङ्गीकारे सर्वम् उपपद्यते इति चेद्, न, प्रत्येकम् अतद्वचनात्. अभेदवचनात्. "इयं पृथिवी सर्वेषां भूतानां मधु" (बृहदा.उप.2।5।1) इति ब्राह्मणे "अयमेव स यो अयम्" (बृहदा.उप.2।5।1) इति सर्वत्र अभेदवचनात्, कार्यकारणरूपप्रकाराणां भेदनिषेधात्. तस्माद् न भेदाङ्गीकारेण श्रुतयो योजयितुं शक्याः॥ 12॥

अपि चैवमेके॥13॥

भेदाङ्गीकारे बाधकम् आह. अपि च एवमेव अभेदमेव भेदनिषेधेन एके शाखिनो वदन्ति. "मनसैवेदम् आप्तव्यं, नेह नानास्ति किञ्चिन, मृत्योः स मृत्युम् आप्नोति य इह नानेव पश्यति"(कठोप.2।1।11) इति भेददर्शननिन्दावचनात्. तस्माद् न भेदाङ्गीकारः कर्तुं

शक्यः. ‘इव’ शब्दो “बहु स्याम्” (तैत्ति.उप.2।6) इति व्यावृत्यर्थः. तस्माद् उपनिषत्सु सर्वप्रकारो अविरोधः सिद्धः॥13॥
इति तृतीयाध्याये द्वितीयपादे चतुर्थम् उभयलिङ्गम् अधिकरणम्॥।4॥

## अरूपवदेव हि तत्प्रधानत्वात्॥14॥ (3।2।5)

एकदेशिमतेन समाधानम् आह. कथम् अत्र सन्देहः, विरोधो वा? जडजीवधर्माणां विधिनिषेधयोः. जडजीवयोः हि जडजीवधर्माः भवन्ति. अन्यत्र तु उपदिश्यमाना उपासनार्था भवन्ति. ननु उक्तो भेदाभावः. सत्यम्. तथापि कार्यकारणांशभावकृतस्य भगवद्विहारार्थं जातस्य भेदस्य निषेद्धुम् अशक्यत्वात्. तस्माद् ब्रह्मणि जडजीवधर्माणां निषेधो युक्तः.उपचारात्तु सर्वकर्मादयः.

विपरीतं किं न स्यात्? अतः आह अरूपवदेव. रूप्यते निरूप्यते व्यवह्रियते इति रूपं सर्वव्यवहारविषयत्वं, तद्युक्तं रूपवद् विश्वम्. ब्रह्मतु तद्विलक्षणम्, कार्यकारणांशांशिनोः वैलक्षण्यस्य युक्तत्वात्.

ननु अवैलक्षण्यमपि युक्तं, कारणत्वाद्, अतः आह तत्प्रधानत्वात्. तस्य ब्रह्मणः प्रधानत्वात् मुख्यत्वात्. यत्र हि यत् प्रतिपाद्यते तत्र तस्य मुख्यत्वम्. ब्रह्मप्रतिपादने ब्रह्मधर्माणामेव मुख्यत्वं, न अन्यधर्माणाम्. यथा प्रशासनस्य मुख्यत्वं तथा ‘सर्वकर्मा’ इति लौकिककर्मानुवादेन भगवत्सम्बन्धे स्पष्टमेव अमुख्यत्वम्. विशिष्टबोधनेऽपि ‘सर्व’शब्दस्य प्रसिद्धानुवादकत्वाद् अतिरिक्तकल्पनायां गौरवात् प्रमाणाभावाच्च.

यथाकथञ्चिद् 1तद्धर्मवत्त्वेन ज्ञानस्यैव उपयोगाद् लोकधर्मानेव अनूद्य 2विशिष्टबोधनम् उचितम्. अरूपम् इति वक्तव्ये अरूपवद् इति वचनं, भिन्नधर्माणामेव एवं निर्णयः, नतु प्रशासनवद् भगवद्धर्माणाम्. तस्मात् कार्यवत् तद्धर्माणामपि कार्यत्वाद् 3भगवत्त्वं, न भगवद्धर्मत्वम् इति सिद्धम्॥14॥

प्रकाशवच्चावैयर्थ्यात्॥15॥

ननु सर्वव्यवहारातीते शास्त्रवैफल्यं, “मनसैव 4एतद् आप्तव्यम्” (कठोप.2।1।11) इति विरोधश्च न परिहृतः, “तं त्वौपनिषदं पुरुषं पृच्छामि”(बृहदा. उप.3।9।26) “यतो वाचो निवर्तन्ते”(तैत्ति.उप.2।4,5) इति च, इत्यतः आह प्रकाशवत्. यथा सौरप्रकाशो व्यवहार्यो अव्यवहार्यश्च, न हि स्वतः सम्पादयितुं शक्यते, स्थापयितुं वा आगतेतु सूर्ये मेघाद्यभावे च सान्निध्य-मात्रेण व्यवहारः कर्तुं शक्यते, तथा लौकिकवाङ्मनोभिः न शक्यते व्यवहर्तुम्, ईश्वरसन्निधानेतु शक्यते इति द्वयम् आह श्रुतिः. कुतः एतद् अवगम्यते? तत्र आह अवैयर्थ्यात्. अन्यथा शास्त्रं व्यर्थं स्यात्. ‘च’काराद् धर्माणां तथात्वविरोधः परिहृतः. “आसीनो दूरं व्रजति”(कठोप.1।2।21) “अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स श‍ृणोत्यकर्णः”(श्वेता.उप.3। 19) इत्यादौ अलौकिकाः भगवद्धर्माः उच्यन्ते.

अकारणककार्यवचनात् *तद्धर्माणां च अकार्यत्वं बोधयति. तस्माद् अव्यवहार्येऽपि न शास्त्रवैफल्यम्॥15॥

किञ्चिद् आशङ्क्य परिहरति. ननु अलौकिकानि इन्द्रियाणि विरोधाभावाय कथं न कल्प्यन्ते? अन्यथा अकारणककार्यत्वं, तस्य च नित्यत्वम् अलौकिकत्वं, ततश्च “पश्यत्यचक्षुः” (श्वेता.उप.3।19) इति विरोधः इति आशङ्क्य परिहरति

आह च तन्मात्रम्॥16॥

आह च श्रुतिः स्वयमेव तन्मात्रं प्रज्ञानघनमात्रं “स यथा सैन्धवघनो अनन्तरो अबाह्यः कृत्स्नो रसघन एवं वा अरे अयम् आत्मा अनन्तरो अबाह्यः कृत्स्नःप्रज्ञानघनएव”(बृहदा.उप.4।5।13) इति स्वरूपातिरिक्तानाम् इन्द्रियाणाम् अभावात्. नच क्रियाभावोऽपि, वेदविरोधेन तथा कल्पयितुम् अशक्यत्वात्. वेदनिःश्वासायनभूतसमुत्थानादेः उक्तत्वाच्च. अतो न इन्द्रियाणां परिकल्पना किन्तु सर्वाकारस्वरूपं वस्त्वेव तादृशम् इति मन्तव्यम्, ‘कृत्स्न’-वचनात्. ‘च’कारात् “सर्वेन्द्रियविवर्जितम्” (भग.गीता 13।14) इति स्मृतिरपि. तस्माद् न इन्द्रियकल्पनया अविरोधः॥16॥

पुनः प्रकारान्तरेण विरोधम् आशङ्क्य परिहरति. ननु ब्रह्म जगत्कारणम् इति सिद्धम्. तच्च समवायि निमित्तञ्च इतिच. कारणधर्माएव हि कार्ये भवन्ति. असम्भावनायान्तु अन्यथाकल्पनम्. कामादयो धर्माश्च श्रुतौ विहिताः. ते ब्रह्मणएव भवितुं युक्ताः. निषेधिकापि श्रुतिः. न हि वेदवादिनाम् अणुमात्रमपि अन्यथाकल्पनम् उचितम् इति आशङ्क्य परिहरति.

दर्शयति चाथोऽपि स्मर्यते॥17॥

दर्शयति श्रुतिरेव जडजीवधर्माणां भगवति अभावः इति. “द्वे वा व ब्रह्मणो रूपे” (बृहदा.उप.2।3।1) इत्युपक्रम्य, द्वेधा पञ्चभूतानि उक्त्वा, “अथात आदेशो नेति नेति”(बृहदा.उप.2।3।6) इति आह. ‘इति’शब्दः प्रकारवाची. ब्रह्म पञ्चमहाभूतानि भवति, नतु एवम्प्रकारकम्. तत् साधयति ‘न’. न भवत्येव ब्रह्म तादृशम्. ‘हि’ युक्तो अयम् अर्थः. एतस्माद् जातम् इति. न हि कार्यकारणयोः एकः प्रकारो भवति. अतो “नेति” इति प्रकार-निषेधोपसंहारः, नतु समवायित्वमात्रत्वं किन्तु अन्यत्परम् अस्ति इति रूपं निरूप्य नाम निरूपयति. “सत्यस्य सत्यम्”(बृहदा.उप.2।1।20) इति. तेन प्रपञ्चातिरिक्तब्रह्मणो विद्यमानत्वात् प्रपञ्चधर्मवचनं तस्मिन् औपचारिक-मेव युक्तम्. श्रुत्यैव तथाप्रतिपादनात्. ‘च’कारः पूर्वयुक्त्यनुसन्धानार्थः. अथो इति प्रक्रमभेदोऽपि. “अथात आदेशः”(बृहदा.उप.2।3।6) इति भिन्नप्रक्रमेण आह. श्रुतेः अन्यार्थतानिराकरणाय आह अपि स्मर्यते. “अनादिमत्परं ब्रह्म न सत् तन्नासदुच्यते”(भग.गीता 13।12) इति. सदसतोः क्षेत्रत्वात्. ज्ञेयनिरूपणे निषेधः प्रपञ्चधर्माः भगवति उच्यन्ते वेदादौ, नतु तद्धर्माः भवन्ति इति ज्ञापयति. तस्माद् श्रुतिस्मृतिभ्यामेव तथानिर्णयः॥17॥

प्रपञ्चधर्माः भगवति उपचाराद् उच्यन्ते इत्यत्र निदर्शनान्तरम् आह
अतएव चोपमा सूर्यकादिवत्॥18॥

अतएव इममेव निर्णयम् आश्रित्य, "समः प्लुषिणा समो नागेन समो मशकेन सम एभिः त्रिभिः लोकैः समो अनेन सर्वेण"(बृहदा.उप.1।3।22) इति निरुपमस्य भगवतो यद् उपमानं तत् तद्धर्मसम्बन्धात्. नच अत्र स्वतन्त्र-तादृशधर्मत्वं ब्रह्मणो वक्तुं युक्तम्. ननु इदमपि विरुद्धम् इति आशङ्क्य दृष्टान्तम् आह सूर्यकादिवत्. सूर्येण सहितं जलं सूर्यकम्. "यथा हि अयं ज्योतिरात्मा विवस्वान् अपो भिन्ना बहुधैको अनुगच्छन्, एकधा बहुधा चैव दृश्यते जलचन्द्रवद्"(ब्रह्मबि.उप.12) इति. यथा इतरसंश्लिष्टस्य उपमान-त्वम्, एवं "समः प्लुषिणा"(बृहदा.उप.1।3।22) इत्यपि. 'च'कारस्तु विरोधाभावो वक्तव्यः, अधिकरणं च सम्पूर्णम् एकदेशिनः इति सूचयति. तस्माद् जडजीवधर्माणां भगवति उपचारः, निषेधस्तु मुख्यः इति॥18॥

इति तृतीयाध्याये द्वितीयपादे पञ्चमम् अरूपवदेव हि इति अधिकरणम्॥5॥

### अम्बुवदग्रहणात्तु न तथात्वम्॥19॥ (3।2।6)

मुख्यसिद्धान्तं वक्तुं एकदेशिनं दूषयति. 'तु'शब्दः तथासिद्धान्तं व्यावर्तयति. तथात्वं *समवायातिरिक्तस्य तद्धर्मयोगात्. जडजीवधर्मयोगात् सर्वकामत्वादयो न भवन्ति. कुतः? अम्बुवदग्रहणात्. सर्वपरस्य हि प्रतिबिम्बे अधिकरणधर्मत्वम्. तत्र रूपरहितं तत्र विद्यमानं च न प्रतिबिम्बतः इति वक्तव्यम्. तथापि स्वमतविरोधाद् अम्बुवदग्रहणम् इति. स्वच्छम् अम्बु प्रतिबिम्बं गृह्णाति. न हि तथा धर्माः ग्रहीतुं शक्नुवन्ति, धर्मत्वाच्च. सर्वाधारत्वेन तथोच्यमाने वैयर्थ्यम् इति पूर्वम् अवोचाम. नच भ्रमात् कल्पनं वेदेन उच्यते, अप्रतारकत्वात् सर्वज्ञत्वाच्च. विप्लववादिनएव एवं वचनं, न वैदिकस्य. "पृथिव्यां तिष्ठन्" (बृहदा.उप.3।7।3) इत्यादिविरोधश्च. तस्माद् ब्रह्मधर्माएव सर्वकामादयो नतु उपाधिसम्बन्धाद् औपचारिका इति॥19॥

वृद्धि-ह्रास-भाक्त्वम् अन्तर्भावाद् उभयसामञ्जस्याद् एवम्॥20॥

सिद्धान्तेन विरोधपरिहारम् आह. विरोधो हि परिहरणीयो लोक-वेदाभ्यां तदनुसारेण. महान् अवकाशो अल्पो अवकाशः, "यथावकाशं दश चमसान्" (आप.श्रौत.12।2।10) इति लौकिक-वैदिकव्यवहारो वस्तुधर्म-विरुद्धो दृश्यते. व्यापकत्वं वृद्धि-ह्रासौ च आकाशस्यैव. तत्र यथा करके प्रविष्टः आकाशः तथाव्यपदिश्यते, तथा सति उभयसामञ्जस्यं भवति, अन्यथा एकतरबाधो भवति, एवं तत्तदनुप्रवेशाद् ब्रह्मापि एवम्. *नच औपाधिकत्वम्, जपाकुसुमलौहित्यवद् अन्यधर्मत्वाभावात्. अन्यानुविधायित्वेऽपि स्वधर्माएव ते, कारणत्वादिवत्. नच आगन्तुकत्वात् तद्धर्माएव न भवन्ति इति वाच्यम्, अन्यधर्मत्वे प्रमाणाभावात्. तद्गतत्वप्रतीतेश्च दृष्टत्वाच्च अविरोधः. अविरोधप्रकारो अयम्. यथा उभयसामञ्जस्यं भवति, प्रकारोऽपि तस्यैव तथा वक्तव्यः. तस्मात् यथा

आकाशस्य वृद्धि-ह्रासभाक्त्वं करकादिषु अन्तर्भावात् तथैव उभयसामञ्जस्याद्, एवं ब्रह्मापि. 'वृद्धिह्रास'पदेन शरीरे आकाश-जीवयोः एकम् उदाहरणं बोधयति॥20॥
दर्शनाच्च॥21॥

हेत्वन्तरम् आह : भगवति सर्वे विरुद्धधर्माः दृश्यन्ते. न हि दृष्टे अनुपपन्नं नाम, व्याघातात्. तादृशमेव तद्वस्तु इतितु अध्यवसायः प्रामाणिकः. 'च'काराद् उलूखलबन्धनादिषु प्रत्यक्षमेव उभयसाधकं दृष्टम् इति. "अथो अमुष्यैव ममार्भकस्य" (भाग.पुरा.10।8।40) इति च. तस्मात् श्रुति-स्मृति-प्रत्यक्षैः सर्वविरुद्धधर्माश्रयत्वेन ब्रह्मप्रतीतेः न विरोधः॥21॥

परमार्थतो विरोधं परिहृत्य युक्त्यापि प्रतिषेधति. ननु सर्वविशेष-धर्माणाम् अस्थूलादिवाक्यैः(बृहदा.उप.8।3।3) निषेधात् कथम् अविरोधः प्रत्येतव्यः? इति चेत्, तत्र आह
प्रकृतैतावत्वं हि प्रतिषेधति ततो ब्रवीति च भूयः॥22॥

प्रकृतैतावत्वं हि प्रतिषेधति. प्रकृते यद् एतावत् परिदृश्यमाना यावन्तः पदार्थाः लौकिकाः तेषामेव धर्मान् निषेधति. प्रतीतस्यैव हि निषेधात्. अतो जगद्वैलक्षण्यमेव अस्थूलादिवाक्यैः प्रतिपाद्यते, नतु वेदोक्ताः ब्रह्मधर्माः निषेद्धुं शक्यन्ते. कुतः एतद् अवगम्यते? तत्र आह ततो ब्रवीति च भूयः. यत्रैव
वाक्ये पूर्वं निषेधति, तस्मिन्नेव वाक्ये पुनः तमेव विधत्ते. "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह, आनन्दं ब्रह्मणो विद्वान्"(तैत्ति.उप.2।9) इति. तथा अस्थूलवाक्येऽपि "एतस्यैव प्रशासने" (बृहदा.उप.3।8।9) "एतद् विदित्वा" (तत्रैव 3।8।10) "आकाश ओतश्च प्रोतश्च" (तत्रैव 3।8।11) इति. 'च'काराद् एकवाक्योपाख्यानभेदौ सङ्गृहीतौ. सर्वत्र लौकिकं प्रतिषेधति, अलौकिकं विधत्ते इति युक्त्या निर्णयः. तस्माद् युक्त्यापि अविरोधः॥22॥
इति तृतीयाध्याये द्वितीयपादे षष्ठम् अम्बुवदग्रहणाद् इति अधिकरणम्॥6॥

## तदव्यक्तमाह हि॥23॥ (3।2।7)

शब्दबलविचारेण विरोधं परिहृत्य अर्थबलविचारेण अविरोधप्रति-पादनाय अधिकरणम् आरभते. सर्वाणि विरुद्धवाक्यानि उदाहृत्य चिन्त्यन्ते.
"न चक्षुषा गृह्यते" (मुण्ड.उप.3।1।8)
"कश्चिद्धीरः प्रत्यगात्मानमैक्षत्" (कठोप.2।4।1)
"नापि वाचा" (मुण्ड.उप.3।1।8)
"सर्वे वेदा यत्पदमामनन्ति" (कठोप.3।15)
"अप्राप्य मनसा सह" (तैत्ति.2।9)
"मनसैवैतदाप्तव्यम्" (कठोप.2।1।11)
"अस्पर्शमगन्धमरसं" (कठोप.1।3।15)

“सर्वरूपः सर्वगन्धः सर्वरसः” (छान्दो.उप.3।14।2)
“अपाणिपादः” (श्वेता.उप.3।19) इत्यादि
“विश्वतश्चक्षुः” (तैत्ति.सं.4।6।2।4) इत्यादि,
“निर्गुणश्च” (श्वेता.उप.6।11)
“यः सर्वज्ञः सर्वशक्तिः” (छान्दो.उप.3।14।2)

इत्यादिविरुद्धवाक्यानि. न हि वस्तु द्विरूपं सम्भवति. वाक्यद्वयमपि प्रमाणम्. तथा सति प्रमाणान्तरानुरोधेन एकस्य स्वार्थे प्रामाण्यम् अन्यस्य उपचरितार्थत्वम् इति युक्तम्. तत्र प्रत्यक्षानुरोधेन निर्णयो विचार्यते.

तत्र पूर्वपक्षम् आह. तद् अव्यक्तम्. तद् ब्रह्म अव्यक्तमेव भवितुम् अर्हति. कुतः? आह हि. श्रुति-प्रत्यक्षाभ्याम्. “नेति नेत्यात्मा अग्राह्यो न हि गृह्यते” (बृहदा.उप.3।9।26) इति. “न हि गृह्यते” इति अनुभवसाक्षिकं प्रमाणं श्रुतिः आह. न हि केनचिदपि चक्षुषा मनसा वा ब्रह्म दृष्टम् अस्ति. सर्वरूपत्वेतु सर्वैरेव द्रष्टुं शक्येत. तस्मात् सर्वधर्मवत्वेन प्रतिपादकानि उपचरितार्थान्येव. अनुभवविरोधाद् इति एवं प्राप्तम्॥23॥

अपि संराधने प्रत्यक्षानुमानाभ्याम्॥24॥

‘अपि’इति पूर्वपक्षगर्हायाम्. सर्वथा मूर्खः पूर्वपक्षवादी. यतः संराधने सम्यक् सेवायां भगवत्तोषे जाते दृश्यते.

“श्रद्धा-भक्ति-ज्ञानयोगाद् अवेहि” (कैव.उप.2)
“यमेवैषवृणुते तेन लभ्यः” (कठो.उप.2।22)
“भक्त्या त्वनन्यया शक्यः अहम् एवंविधोऽर्जुन,
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप”

(भग.गीता.11।54) इति. द्विविधमपि रूपं दृश्यते.

“ततस्तु तं पश्यते निष्कलं ध्यायमानः” (मुण्ड.उप.3।1।8)
“अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम्”
(भग.गीता.11।16)

इति संराधकस्य स्वानुभवः, ध्रुवादीनाम् अनुमापकत्वं च. तस्मात् प्रत्यक्षानुमानाभ्यां श्रुति-स्मृतिभ्यां वा ब्रह्म साकारम् अनन्तगुणपरिपूर्णञ्चेति न अव्यक्तमेव इति निश्चयः. अतो लौकिकालौकिक-प्रत्यक्षविषयत्वाद् उभय-वाक्यार्थरूपमपि ब्रह्म॥24॥
इति तृतीयाध्याये द्वितीयपादे सप्तमं तदव्यक्तम् आह हि इति अधिकरणम्॥7॥

## प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात्॥25।(3।2।8)

पुनः प्रकारान्तरेण पूर्वोक्तमेव स्थिरीकर्तुम् अधिकरणान्तरम् आरभते. तत्र सूत्रद्वयेन पूर्वपक्षद्वयम् आह.

ननु प्रत्यक्षानुरोधेन उभयविधवाक्यसमाधानं न उपपद्यते, वस्तुशक्त्यैव निर्णयः उचितः, नतु श्रुतिप्रत्यक्षाभ्यां, यथा प्रकाशजलसुवर्णादीनाम् अनेक-विधत्वं न अङ्गीक्रियते, सूर्यचन्द्रमणिप्रकाशादिषु उष्णशीतानुभवरूपस्पर्शाः प्रतीयन्ते, न हि तेजसि तावन्तः स्पर्शाः अङ्गीक्रियन्ते, जले च हिमतप्तकुण्डा-दिषु, तथा सुवर्णे वर्णभेदाः, न हि सर्वे स्वाभाविकाः, तेजस्त्वादिस्वभावहानि-प्रसङ्गात्, तथा ब्रह्मणोऽपि अवैशेष्यम् अङ्गीकर्तव्यं, निर्विशेषं हि ब्रह्म इति सर्वप्रसिद्धिः. 'च'काराद् एवं साधकाः "अग्राह्यो न हि गृह्यते"(बृह.उप.3।9। 26) इत्येवमादयः. ननु उक्तं तस्य तथासाक्षात्कारात् तादृशश्रुतेश्च न एकविधत्वम् अङ्गीकर्तुं शक्यते इति. न एषः दोषः. प्रकाशश्च कर्मणि. तपःप्रणिधानादिकर्मणि भगवतः प्रकाशः. तत्र यथा तेषां कामः तथा प्रकटी-भवति. 'च'कारद् अप्रकाशान्यथाप्रकाशौ. तत्र हेतुः अभ्यासाद् आवृत्तेः. यदि एकवारं प्रकटः स्यात् तदा तद्रूपत्वम् अङ्गीक्रियेतापि. प्रतिभक्तं प्रतिकर्म च आविर्भावः. अतः प्रकाशोऽपि कृत्रिमएव दीपप्रकाशवत्. अन्यथा सर्वदा स्यात्. तस्माद् न भक्तप्रत्यक्षेण निर्णयः॥25॥

अतो अनन्तेन तथा हि लिङ्गम्॥26॥

फलितम् आह. अतः अभ्यासात्. अनन्तेन अनन्तरूपेण आविर्भावः. न हि एकं वस्तु प्रतिक्षणम् अन्यादृशं भवति निमित्तभेदव्यतिरेकेण. क्वचिद् भक्तकामश्च निमित्तत्वेन प्रतीयते. न हि निमित्तभेदेन जायमानं वस्तु भवति. किन्तु तथा सति लिङ्गं विग्रहएव भवति. युक्तश्च अयम् अर्थः. "यद् यद्धिया त उरुगाय विभावयन्ति तत्तद् वपुः प्रणयसे सदनुग्रहाय" (भाग.पुरा.3।9।12) इति. अतः श्रुत्या प्रत्यक्षेण वा न तथानिर्णयः कर्तुं शक्यः. तस्मात् सर्वागोचरमेव ब्रह्म इत्येवं प्राप्तम्॥26॥

उभयव्यपदेशातु अहिकुण्डलवत्॥27॥

'तु'शब्दः पक्षं व्यावर्तयति. न एवं केवलयुक्त्या लोकदृष्टान्तेन निर्णयः शक्यते कर्तुम्. अन्यथा इदं शास्त्रं व्यर्थमेव स्यात्. अत्र हि वेदादेव ब्रह्मस्वरूप-ज्ञानम्. तत् कथं स्वरूपशक्त्या निर्णयः? ब्रह्मतु उभयरूपम्, उभयव्यपदेशात्. उभयरूपेण निर्गुणत्वेन अनन्तगुणत्वेन सर्वविरुद्धधर्मेण रूपेण व्यपदेशात्. तर्हि कथम् एकं वस्तु अनेकधा भासते? तत्र आह अहिकुण्डलवत्. यथा सर्परज्जुः अनेकाकारः कुण्डलश्च भवति तथा ब्रह्मस्वरूपं सर्वप्रकारम्. भक्तेच्छया तथा स्फुरति. कल्पनाशास्त्रे हि इदं बाधकम्, अनेककल्पनागौरवं च इति. नतु केवलं श्रुत्येकसमधिगम्ये. नच शास्त्रवैफल्यम्. एवं साधनार्थत्वात्. अत्रैव हि सूरिव्यामोहाद् अन्यशास्त्रोत्पत्तिः. अतः सर्वविरुद्धधर्माणाम् आश्रयो भगवान्. न हि प्रमाणश्रुतदृष्टे अनुपपत्तिः अस्ति, यदर्थं युक्त्यपेक्षा. लोकेऽपि शरीरान्तः-करणादीनि परस्परविरुद्धदयामारकत्वादीनि विषयभेदेन एकस्मिन्नपि क्षणे प्रतीयन्ते. तस्मात् सकलविरुद्धधर्माः भगवत्येव वर्तन्तइति न कापि श्रुतिः उपचरिताथा इति सिद्धम्॥27॥

इति तृतीयाध्याये द्वितीयपादे अष्टमं प्रकाशादिवच्च इति अधिकरणम्॥8॥

धर्मस्वरूपविचारेण पूर्वोक्तपक्षद्वयं स्थापयितुम् अधिकरणारम्भः. ननु धर्माः नाम के? ब्रह्मणो भिन्नाः तत्कार्यरूपाः, आहोस्वित् ब्रह्मैव इति संशयः. तत्र लोके कार्यस्यैव पटरूपादेः तद्धर्मत्वात् समवेतत्वात् तन्नित्यतायां प्रमाणाभावात् स्वाभाविकत्वमात्रेण नित्यत्वकल्पनायां गौरवापत्तेः "एकमेवा-द्वितीयम्" (छान्दो.उप.6।2।1) इतिश्रुतिविरोधाच्च धर्माः प्रपञ्चवत् कार्याः. तथा सति ब्रह्म सर्वकल्पनारहितमेव सेत्स्यति इत्येवं प्राप्ते, इदम् उच्यते.

## प्रकाशाश्रयवद् वा तेजस्त्वात्॥28॥ (3।2।9)

प्रकाशाश्रयवद् वा. 'वा'शब्दः पक्षं व्यावर्तयति. यथा प्रकाशाश्रयाः सूर्यादयः प्रकाशेन न भिन्नाः पृथक्स्थित्यभावात् समवेतत्वाच्च. मूलाविच्छेद-रूपेण तदाधारतया स्थितत्वाच्च. नापि सूर्यएव. भिन्नप्रतीतेः विद्यमानत्वाच्च. तादृशमेव तद्वस्तूत्पत्तिसिद्धम् इति मन्तव्यम्. कल्पनायामपि यथा सूर्यप्रकाशयोः कल्पना, एवं ब्रह्मधर्मयोरपि. नहि अन्यथा वेदप्रवृत्तिः निषेधशेषता सत्यज्ञाना-नन्तानन्दपदानां सामानाधिकरण्यं वा सम्भवति. लक्षणायान्तु सुतरामेव धर्मापेक्षा. अतो विशिष्टपदार्थएव तादृशो वेदसिद्धः इति मन्तव्यम्. तत्र हेतुः तेजस्त्वात्. 'तेजः'शब्दवाच्यत्वात्. बहुदूरव्याप्त्यर्थमेव हेतुः उक्तः. आतपादेः धर्मत्वेन धर्मित्वेन च प्रतीतेः. अपूर्ववदेव दृष्टत्वात् श्रुतत्वाच्च न धर्मेष्वपि युक्त्यपेक्षा. तस्मात् सिद्धं यथाश्रुतमेव ब्रह्म इति॥28॥

पूर्ववद् वा॥29॥

एकदेशिमतेनापि सर्वसमाधानम् आह. अथवा, "अरूपवदेव हि" (बह्मसू.3।2।14) इत्यादिपञ्चसूत्र्या यः सिद्धान्तः कथितः तादृशं वा ब्रह्म प्रतिपत्तव्यम्. अयम् आशयः. वेदस्थापनार्थं हि प्रवृत्तिः. तत्र यथा अक्षरमात्र-स्यापि बाधो न भवति तथा वक्तव्यम्. यदर्थम् उभयरूपता अङ्गीकृता, तत्र धर्माणां स्वरूपनिर्वाहार्थम् अवश्यं ब्रह्मवैलक्षण्यम् अङ्गीकर्तव्यम्. तथा सति "एकमेवाद्वितीयम्" (छान्दो.उप.6।2।1) इति बाधः प्रसज्येत. तथाच उत्पत्त्या विचारे निर्धर्मकमेव पूर्वं ब्रह्म इति प्रतिपत्तव्यम्. उपपत्त्यापि विचारः पूर्वानुरोधेनैव कर्तव्यः. तत्र धर्माणामपि ब्रह्मत्वे एकविज्ञानेन सर्वविज्ञानम् उपपद्यते, न अन्यथा. ततश्च प्रथमं ब्रह्म स्वधर्मरूपेण भवति. तदनु क्रियादिरूपेण प्रपञ्चरूपेण च. तावतैव सर्ववेदार्थसिद्धेः. नच लौकिकी युक्तिः तत्र अपेक्ष्यते येन तादृशस्य कथं सर्वभावः इति पर्यनुयोगो भवेत्. धर्मकल्पनायामपि "नैषा तर्केण मतिरापनेया"(कठोप.2।9) इति समानम्. उत्पत्त्या च उपपत्त्या च विचारद्वयम्. उपपत्या पूर्वनयनं स्वसिद्धान्तः. एकदेशिनः तद्विपरीतम्. उभयमपि सूत्रकारस्य सम्मतम् इति॥29॥

प्रतिषेधाच्च॥30॥

एकदेशिमते उपपत्त्यन्तरम् आह. "एकमेव" (छान्दो.उप.6।2।1) इति उक्त्वा पुनः "अद्वितीयम्"(तत्रैव) इति द्वितीयं प्रतिषेधति. सः 'एव'-कारेणैव सिद्धो व्यर्थः सन्

धर्मनिषेधमपि सूचयति. “ऐक्षत” (छान्दो.उप. 8।2।1) इति वचनात् तदुत्पत्तिः. ‘च’काराद् एकविज्ञानेन सर्वविज्ञानोपक्रमः परिगृहीतः. तस्माद् न ब्रह्मणि कश्चिद् विरोधः इति सिद्धम्॥30॥
इति तृतीयाध्याये द्वितीयपादे नवमं प्रकाशाश्रयवद्वा इति अधिकरणम्॥9॥

## परम् अतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः॥31॥(3।2।10)

धर्मि-धर्मविरोधः परिहृतः. धर्म्यन्तरविरोधपरिहारार्थम् अधिकरणम् आरभते. तत्र पूर्वपक्षम् आह परम् अतः. अतोऽपि ब्रह्मणः परम् अन्यद् उत्कृष्टं फलम् अस्ति. तत्र वैदिकहेतवः. सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः. यद्यपि समन्वयएव एते दोषाः परिहृताः, तथापि स्वरूपविरोधपरिहारप्रस्तावात् पुनः उच्यन्ते. सर्ववाक्यप्रतिपाद्यम् एकमेव इत्यपि न सिद्धम्. एतैः हेतुभिः परिच्छेदेन धर्मिभेदे सिद्धे न पूर्वाधिकरणसिद्धान्तविरोधः. ननु समन्वयेन ब्रह्मत्वम् उत्तरपादेन ऐक्यं पूर्वाधिकरणेन अविरोधइति व्यर्थम् इदम् अधिकरणम् इति चेद्, न. अर्थबलविचारो अयम्. समन्वये च उत्तरपादे च शब्दबलविचारः. धर्मिविचाराद् न पूर्वेण गतार्थत्वम्.

फलतः *साधनतश्च प्रमेयाच्च प्रमाणतः।
विचारेणाबृहत् तच्चेत् कोऽन्यः साधयितुं क्षमः॥1॥

अतो हेतून् बाधकान् आह एकदेशबाधकत्वात्. तत्र फलतो बाधहेतुम् आह सेतुव्यपदेशात्. “अथ य आत्मा स सेतुर्विधृतिः”(छान्दो.उप.8।4।1) इति. “दहर उत्तरेभ्यः”(ब्रह्मसू.1।3।14) इत्यत्र ब्रह्मत्वम् अस्य सिद्धम्. “अथ य इहा आत्मानम् अनुविद्य व्रजन्ति” (छान्दो.उप.8।1।6) इति उपक्रम्य “सर्वेषु लोकेषु कामचारो भवति” (तत्रैव 8।1। 6) इति उक्त्वा, कामान् उपपाद्य, अज्ञानव्यवधानं ज्ञानप्रशंसार्थम् उक्त्वा, ज्ञानानन्तरं संसारसम्बन्धा-भावाय सेतुत्वं वदति पापाब्धितरणार्थम्. यश्च तरति, तद्गताश्च दोषाः गच्छन्ति इति च. अतः संसारफलयोः मध्ये विद्यमानत्वात् तीर्णस्यैव फल-श्रवणात् फलरूपं वस्तु किञ्चिद् अन्यद् अस्ति इति ज्ञायते. निधित्वेन फलवचनम् अवान्तरफलपरं भविष्यति. “एतम् आनन्दमयम् आत्मानम् उपसङ्क्रम्य” (तैत्ति.उप.3।5) इत्यपि अत्र उदाहरणम्. तथा उन्मानव्यपदेशात्. “तत्रैव यावान् वा अयम् आकाशः तावान् एषो अन्तर्हृदय आकाशः” (छान्दो.उप. 8।1।3) इति साधनयुक्तिप्रश्ने, उन्मानेन परिच्छेदं निरूपयति. दृष्टान्त-दार्ष्टान्तिकत्वेन ज्ञानं साधनम्. तत्र बहिः आकाशज्ञानमपि साधनं भवति. चतुष्पाच्च ब्रह्म भूतादिपादाश्च ज्ञातव्याः. तथा सम्बन्धव्यपदेशात्. तत्रैव
प्रमेयनिरूपणप्रस्तावे “उभावस्मिन्”(छान्दो.उप.8।1।3) इत्यादिना आधाराधेयसम्बन्धो निरूपितः. अत्रच वस्तुपरिच्छेदो निरूपितः. “प्राज्ञेन आत्मना सम्परिष्वक्तः” (बृहदा. उप.4।3।21) इति च. तथा भेदव्यपदेशात्. “य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते” (छान्दो.उप.4।15।1) “य एषो अन्तर् अक्षिणि पुरुषो दृश्यते”(तत्रैव.4।15।1) इत्यत्र

स्थानद्वयस्थितयोः पुरुषयोः परस्परं धर्मातिदेशम् आह. अक्षिस्थितनिरूपकम् अतिदेशः प्रमाणम् इति. धर्म्यभेदेतु "सएव अयम्" इति वदेत्. अतो देश-काल-वस्तु-स्वरूपपरिच्छेदात् चतुर्विधपरिच्छेदरहितम् अन्यत् किञ्चिद् अस्ति इति प्रतिपत्तव्यम् इत्येवं प्राप्तम्॥31॥

सामान्यात्तु॥32॥

'तु'शब्दः पक्षं व्यावर्तयति. समानस्य भावः सामान्यम्. सेत्वाकाशादिशब्दाः तद्धर्मातिदेशार्थम् उच्यन्ते, नतु तद्‌गतं दोषमपि कल्पयन्ति. संसारसागरोत्तरणोपायत्वात् सेतुत्वम्. निर्लेपाय आकाशत्वम्. कामाभिदोहाय चतुष्पात्त्वम्. अमृतत्वाय षोडशकलत्वम्. अतिदुर्लभत्वाय सम्बन्धः. दिव्यत्वाय धर्मातिदेशः. कुण्डपायिनाम् अयने मासाग्निहोत्रवद् गुणार्थमेव वचनं, न दोषार्थमिति न ततो अन्यशङ्का उत्पादनीया. तस्माद् न पूर्वोक्ताः दोषाः॥32॥

बुद्ध्यर्थः पादवत्॥33॥

अन्यसमानधर्मवत्त्वं कुत्र उपयुज्यते? इत्यतः आह बुद्ध्यर्थः. तथा व्यपदेशो बुद्ध्यर्थः. बुद्धिरेव प्रयोजनं यस्य. तथोपासनार्थम् अयुक्तम् इति आशङ्क्य दृष्टान्तम् आह. यथा [1]भूतादीनां पादत्वज्ञानम् उपासनार्थं तथा तत्तद्‌गुणवत्त्वेन ज्ञानार्थं स्वधर्मप्रशंसार्थम् एवम् उच्यते॥33॥

स्थानविशेषात् प्रकाशादिवत्॥34॥

ननु "सएव अयम्" इति अतिदेशेऽपि तथा बुद्धिः [2]सम्पद्येतैवेति व्यर्थो धर्मातिदेशः इति आशङ्क्य, तथोक्तेऽपि समानधर्मत्वज्ञानाभावे हेतुम् आह स्थानविशेषाद् इति. धर्म्यैक्येऽपि स्थानविशेषप्राप्त्या न समानधर्मवत्त्वं दृश्यते. अन्यत्र इत्यत्रापि न तथात्वम् आयास्यति इति अतिदेशो धर्माणामपि कृतः इति अर्थः. अस्मिन् अर्थे दृष्टान्तम् आह प्रकाशादिवद् इति. "यदादित्यगतं तेजः" (भग.गीता 15।12) इति वाक्याद् आदित्य-चन्द्राग्निगत-तेजसाम् ऐक्येऽपि न समानप्रकाशत्वं यथा, तथा अत्रापि इति ज्ञानसम्भवाद् इति अर्थः. [3]'आदि'पदाद् एकस्यैव कालस्य यथा उपाधिविशेषसम्बन्धाद् उत्तरायणत्वाद् उत्तमधर्मवत्त्वं तद्विपरीतधर्मवत्त्वं तथा इत्यपि संगृह्यते॥34॥

उपपत्तेश्च॥35॥

किञ्च, सत्यज्ञानाद्युक्तधर्मविशिष्टब्रह्मणो अन्य उत्तमो अस्ति इति वदता तत्र इतः उत्कृष्टधर्मवत्त्वं वाच्यं, तच्च अशक्यं, प्रमाणाभावात्. साम्येऽपि तथा विशेषाभावो अद्वैतश्रुतिविरोधश्च तस्माद् इतः परस्य अनुपपन्नत्वाद् उक्तरूपमेव परमकाष्ठापन्नं वस्तु इति उपपद्यते इति अर्थः ॥35॥

तथान्यप्रतिषेधात्॥36॥

यथा सेत्वादयः श्रुत्योक्ताः तथैव "न तत्समश्चाभ्यधिकश्च दृश्यते" (श्वेता.उप.6।8) इति श्रुत्यैव ततो अधिकस्य प्रतिषेधात् त्वयापि अस्मदुक्तएव मार्गो अनुसर्तव्यः इति अर्थः. अवतारकाले पूर्वं स्वशक्त्याविर्भावम् अकृत्वा पश्चात् तदाविर्भावे

कृते लोकानां पूर्वावस्थातो भगवत्येव आधिक्यमिव प्रतीतं भवति इति अभिप्रायेण 'अन्य'पदोपादानम्॥36॥
अनेन सर्वगतत्वम् आयामशब्दादिभ्यः॥37॥

प्रकरणम् उपसंहरन् फलितम् अर्थम् आह. अनेन सेत्वादिव्यपदेशानां मुख्यार्थकत्वनिराकरणेन व्यापकत्वं ब्रह्मणः सिद्धम् इति अर्थः इति केचित्. तद् न. "जन्माद्यस्य यतः" (ब्रह्मसू.1।1।2) इत्यादिना सर्वदेशगतकार्यकर्तृत्वम् उक्तमिति तेनैव व्यापकत्वस्य सिद्धत्वात्. नच अविरोधसाधनप्रकरणत्वात् पूर्वसिद्धं सर्वगतत्वम् अनेन उक्तग्रन्थेन कृत्वा, सेत्वादिवाक्यैः समम् अविरुद्धम् इति अर्थः इति वाच्यम्, अग्रिमपदवैयर्थ्यापत्तेः इति चेद्, अत्र एवं ज्ञेयं : न उक्तकर्तृत्वेन व्यापकत्वम् एकान्ततो ब्रह्मणि रोद्धुं शक्नोति. योगसिद्धदूरश्रवणादिवत् परिच्छिन्नेनापि अनेकदेशगतकार्यकरणसामर्थ्य-विशेषस्य वक्तुं शक्यत्वात्. अन्यथा पूर्वसिद्धव्यापकत्वविरोधेन सेत्वादिव्यपदेशैः परिच्छिन्नत्वेन ब्रह्मणो अन्यस्य परत्वं न शङ्केत. विरोधपरिहारायतु "सामान्यात्तु अविरोधः" इति वदेत्.

तस्माद् एवं सूत्रार्थो ज्ञेयः. अनेन ब्रह्मणो अन्यस्य परत्वनिरासेन आयामशब्दादिभ्यो व्यापकत्ववाचकश्रुतिवाक्यादिभ्यः साक्षात् सर्वगतत्व-प्रतिपादकेभ्यएव सर्वगतत्वं सिध्यति, नतु गौतमीयानामिव कर्तृत्वाद्यनुपपत्या इति अर्थः. ते च शब्दाः
"आकाशवत् सर्वगतश्च नित्यः" (शत.ब्राह्मण 10।6।3।21 )
"ज्यायान् दिवो ज्यायान् आकाशाद्" (छान्दो.उप.3।14।3)
"वृक्षइव स्तब्धो दिवि तिष्ठत्येकस् तेनेदं पूर्णं पुरुषेण सर्वम्"(तैत्ति.आर. 10।10।3)
इत्यादयः. 'आदि'पदात्. "सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरो-मुखम्, सर्वतः श्रुतिमल्लोके सर्वम् आवृत्य तिष्ठति" (भग.गीता 13।13) इत्यादिस्मृतयः सङ्गृह्यन्ते. अनेन ब्रह्मणि श्रुतिरेव मुख्यं प्रमाणम्, अनुमानन्तु विलम्बोपस्थितिकत्वेन साध्यसिद्धिपराहतमपि इच्छाविशेषेण जननीयं चेद् अभ्युच्चयमात्रं *पर्यवसास्यति इति भावः ॥37॥
इति तृतीयाध्याये द्वितीयपादे दशमं परमतः सेतून्मानेति अधिकरणम्॥10॥

## फलम् अत उपपत्तेः॥38॥ (3।2।11)

एवं सर्वोत्तमत्वनिरूपणेन उत्तमाधिकारिणां भजनीयत्वप्रयोजकं रूपम् उक्त्वा तदितराधिकारिणां तद् आह. ते हि फलप्रेप्सवएव भजिष्यन्ति. तच्च फलदातृत्वएव सम्भवतीति तद् आह. अतः ईश्वरादेव फलं भवति यत्किञ्चिद् ऐहिकं पारलौकिकं वा. कुतः? उपपत्तेः. "सर्वस्य वशी सर्वस्येशानः" (बृहदा.उप.4।4।22) इति श्रुतिः वस्तुमात्रेशितृत्वम् असङ्कुचितम् आह. नहि अन्यस्य वस्तु अन्यो दातुं समर्थः. अतो भगवानेव तथा इति अर्थः.

केचित्तु अत्रैव कर्मणः तत्कार्यापूर्वस्य च फलदातृत्वम् आशङ्क्य, तत्र अनुपपत्तिम् अत्र उपपत्तित्वेन व्याकुर्वन्ति. तत्तु अग्रे जैमिनिमतोपन्यास-स्वमतोपन्यासाभ्यां व्यासएव व्यक्तीकरिष्यतीति अधुनैव अप्राप्तनिराकरणम् अग्रिमसूत्रद्वयवैयर्थ्यं स्याद् इति चिन्त्यम्॥38॥

श्रुतत्वाच्च॥39॥

पूर्वसूत्रेण श्रुतम् ईशितृत्वं फलदाने उपपत्तित्वेन निरूपितम्. इहतु साक्षात् श्रुतिमेव फलदातृत्ववाचिकां प्रमाणयति. साच "स वा एष महानज आत्मा अन्नादो वसुदानः"(बृहदा.उप.4।4।24) इत्यादिरूपा. 'च'कारात् "सुखं दुखं भवो भावः"(भग.गीता 10।4) इति उपक्रम्य "भवन्ति भावा भूतानां मत्तएव पृथग्विधाः"(तत्रैव 10।5) इत्यादिरूपा स्मृतिः सङ्गृह्यते ॥39॥

धर्मं जैमिनिरतएव॥40॥

अत्र कर्मवादी प्रत्यवतिष्ठते. ननु कर्मणएव फलम् इति पक्षेऽपि उपपत्तिश्रवणे तुल्ये. तथाहि, ईश्वरवादिनापि कर्मनिरपेक्षेण तेन फलम् इति न वक्तुं शक्यम्. विधिवैयर्थ्यप्रवृत्यनुपपत्तिप्रसङ्गाभ्यां, तत्सापेक्षत्वे तदेव अस्तु, कृतं तत्सापेक्षेण तेन. नच अचेतनं चेतनाधिष्ठितमेव कार्यक्षममिति केवलेन तेन न फलं सम्भवति इति वाच्यम्. कर्मस्वरूपं स्वर्गादिकं च न लोकसिद्धं किन्तु श्रुतिसिद्धम्. तत्र च स्वर्गादिफलसाधकत्वेनैव उत्पत्तिवाक्येषु अर्थवादेषु च

"अग्निष्टोमने स्वर्गकामो यजेत" (आप.श्रौ.सू.10।2।1)

"अग्निहोत्रं जुहोति प्रजाकामः" (तैत्ति.संहि.1।5।8।1।18) इत्यादि.

"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत"(तैत्ति.ब्राह्म. 5।20।80,81)

"परमेष्ठिनो वा एष यज्ञोऽग्र आसीत्,
तेन स परमां काष्ठाम् अगच्छत्" (तैत्ति.संहि.1।6।9)

इत्यादिषु कर्म श्रूयते. सच तत्साध्यत्वेनैव. एवं सति लोके अन्यथा-दर्शनेऽपि धर्मिग्राहकप्रमाणेन तथैव सिद्धत्वाद् न अत्र काचन शङ्का. ईश्वर-वादिनो नित्यज्ञानादिमत्वइव. आमुष्मिकफलत्वेन तत्प्रतिबन्धकापगमे भवति इति आवयोः तुल्यम्. तस्य आशुतरविनाशित्वेऽपि श्रुतिसिद्धकारणतानिर्वाहाय तद्व्यापारो अपूर्वं कल्प्यते. अविषमाद् ईश्वराद् विषमफलोत्पत्त्यनुपपत्तिः वैषम्यनैर्घृण्ये च स्याताम्. अतः कर्मणएव फलम् इति जैमिनिः मनुते॥40॥

पूर्वं तु बादरायणो हेतुव्यपदेशात्॥41॥

'तु'शब्दः पूर्वपक्षव्युदासार्थः. बादरायणस्तु आचार्य इतः पूर्वोक्तम् ईश्वरमेव फलदत्वेन मनुते. कुतः? हेतुव्यपदेशात्. हेतुत्वेन श्रुतौ व्यपदेशाद् इति अर्थः. "एष उ एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते, एष उ एवासाधु कर्म कारयति यमधो निनीषते" (कौषी.उप.3।9) इति श्रुतौ न केवलं कर्मकारयितृत्वम् उच्यते अपितु फलदित्सया

तया तथात्वम्. अतः फलदत्वम् ईश्वरस्यैव व्यपदिष्टं भवतीति न अनुपपत्तिः काचित्. ननु ईश्वरस्य स्वतः फलदाने समर्थस्य फलदित्सायां सत्यां कर्मकारणे को हेतुः, कार्यवैचित्यं च कथम्? इत्यादि चोद्यं "कृतप्रयत्नापेक्षस्तु विहित-प्रतिषिद्धावैयर्थ्यादिभ्यः" (ब्रह्मसू.2।3।42) इत्यत्र निरस्तम्. विद्वन्मण्डने श्रीविट्ठलेन च. अतः सकामैरपि सएव भजनीयः, न अन्य इति सिद्धम्॥41॥
इति तृतीयाध्याये द्वितीयपादे एकादशं फलमत इति अधिकरणम्॥11॥
इति श्रीवेदव्यासमतवर्ति-श्रीवल्लभाचार्यविरचिते श्रीमद्ब्रह्मसूत्राणुभाष्ये तृतीयाध्यायस्य द्वितीयः पादः॥

## *तृतीयो अध्यायः तृतीयः पादः*

पूर्वपादे जडजीवधर्मनिराकरणेन शुद्धसच्चिदानन्दविग्रहरूपत्वं ब्रह्मणो निरूपितम्. इहतु ब्रह्मगताएव धर्माः विचार्यन्ते. ते चेद् एकस्मिन् वाक्यएव सर्वे पठिता भवेयुः तदा न विचारणीया भवेयुः, विरोधाभावात्. पठिताश्च तत्तदु-पासनप्रकरणेषु क्वचित् तएव क्वचिद् भिन्नाः. यथा वाजसनेयिनः पञ्चाग्निविद्यां प्रस्तुत्य षष्ठम् अन्यम् अग्निं पठन्ति. "तस्य अग्निरेव अग्निः" (बृहदा.उप.6।2। 14) इति. छन्दोगास्तु पञ्चसङ्ख्ययैव उपसंहरन्ति. "अथ य एतान् एवं पञ्चाग्नीन् वेद" (तत्रैव 5।10।10) इति. तथा प्राणसंवादे मुख्यप्राणाद् अन्यान् चतुरः प्राणान् वाक्चक्षुःश्रोत्रमनांसि पठन्ति. वाजसनेयिनस्तु तमपि पञ्चमं पठन्ति.

अपरञ्च, अथर्वोपनिषत्सु क्वचिद् गोकुलवृन्दाकाननसञ्चरद् गोपरूपम् अनल्पकल्पद्रुमप्रसूनविरचितविचित्रस्थलीककालिन्दीसलिलकल्लोलसङ्गिमृदुतर-पवनचलदलकविराजमानगण्डमण्डलद्युतिमण्डितकुण्डलप्रभानुभावितवामांस-मिलन्-मूर्धन्यमहामणिकमुरलिकामुखावलीमिलदतितरलकरकमलयुगलाङ्गुली-वशंवदविविधस्वरमूर्च्छZामोहितव्रजवरनितम्बिनीकदम्बकटाक्षकुवलयार्चितं, क्वचित् कोदण्डमण्डितभुजदण्डखण्डितप्रचण्डदशमुण्डम् अतिविचित्रचरित्राभि-रामं रामस्वरूपं, क्वचिद् अतिकरालवदनवित्रासितकमलाकमलासनवृषभास-नादिकं नृकेसरिरूपं, क्वचिद् उरुक्रमादिरूपं च निरूप्यते. तथाच द्रव्यदेवता-भेदाद् यागभेदवद् धर्माणाम् आवापोद्वापाभ्यां दृष्टादृष्टफलभेदाच्च वेद्यभेदे प्राप्ते ब्रह्मानेकत्वापत्तौ श्रुतिविरोधाद् विनिगमकाभावात् सर्वेषाम् उपासना-विषयाणाम् अब्रह्मत्वम् आपतितम्.

ननु उपासनाविषयाणाम् औपाधिकत्वात् तेषां च अविद्याकल्पितत्वात् तद्विशिष्टानां तथात्वं युक्तमेव, नच एवं तन्निरूपकाणां वेदान्तानाम् अब्रह्म-परत्वप्रसङ्गः,

शुद्धस्य ब्रह्मणो दुर्ज्ञेयत्वेन उपाधिविशिष्टोपासनया चित्तशुद्धौ सत्यां स्वतएव तज्ज्ञानं भविष्यति इति एतत् तात्पर्यकत्वाद् इति चेत्, मैवम्. समन्वयविरोधापत्तेः, तासां ब्रह्मविद्यात्वहानेश्च, श्रुतेः प्रतारकत्वापत्तेश्च.

अपरञ्च, "योऽन्यथा सन्तम् आत्मानम् अन्यथा प्रतिपद्यते, किं तेन न कृतं पापं चौरेणात्मापहारिणा"(महाभा.शान्ति.221।27) इति अन्यथाज्ञानं निन्दन्ती श्रुतिः कथं फलसाधकत्वेन तत्तदुपासनां वदेत्? स्पष्टार्थानां श्रुति-वाक्यानां निर्णयम् अकृत्वा सन्दिग्धार्थानां 'ज्योतिः' 'आकाशा'दिशब्दानां तद्वाचकत्वं न निर्णीयाद् भगवान् व्यासः. एवञ्च सति उक्तरीत्या यागवत् तेषां परस्परं भेदश्च आवश्यकः इति उभयतः पाशारज्जुः इति प्राप्ते, अभिधीयते.

## सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्॥1॥ (3।3।1)

सर्ववेदान्तप्रत्ययम्. अनेकरूपनिरूपकैः सर्वैः वेदान्तैः प्रत्ययो ज्ञानं यस्य तत् तथा. ब्रह्मणो अनन्तरूपत्वेऽपि यानि-यानि रूपाणि विविधैः जीवैः उपासितुं शक्यानि, तानि-तानि रूपाणि तैः-तैः वेदान्तैः निरूप्यन्तइति तावद्रूपात्मकम् एकमेव ब्रह्म इति अर्थः. तत्र हेतुः चोदनाद्यविशेषाद् इति. चोद्यते कर्तव्यत्वेन बोध्यते अनेन इति चोदना, विधिवाक्यम् इति यावत्. तस्य अविशेषाद् इति अर्थः. यथा एकस्मिन् अग्निष्टोमे शाखाभेदेऽपि चोदना तथैव भवति "अग्निष्टोमेन यजेत" (आप.श्रौत.सू.10।2।1) इति तथा इहापि सर्वेषु वेदान्तेषु ब्रह्मत्वेनैव उपासना विधीयतइति तथा. 'आदि'पदात् साक्षात्-परम्पराभेदेन मोक्षफलकत्वकथनमपि उपासनानाम् अविशिष्टम् इति प्रयोजनसंयोगः संगृह्यते॥1॥

भेदाद् न इति चेद् एकस्यामपि॥2॥

ननु द्रव्यदेवताभेदाद् यागभेदवद् उपास्यानां धर्मभेदेन मिथोभेदाद् उक्तहेत्वसिद्धिं भेदाद् न इति चेद्, इत्यनेन आशङ्क्य, तत्परिहारम् आह सूत्रकारः एकस्यामपि इति सूत्रावयवेन. यथा एकस्यामपि गृहीतषोडशिकायाम् अतिरात्रव्यक्तौ अगृहीतषोडशिकायाः सकाशाद् गुणाधिक्येऽपि न अतिरात्र-भिन्नयागत्वम्, अतिरात्रलक्षणकर्मैव अधिकृत्य तद्ग्रहणाग्रहणयोः विधानाद्, एवम् इहापि ब्रह्मैव अधिकृत्य तत्तद्धर्मवैशिष्ट्यावैशिष्ट्ययोः उक्तत्वाद् न ब्रह्मोपासनाभिन्नत्वम् उपासनासु. तथाच ब्रह्मधर्मत्वेन अभेदस्य विवक्षितत्वात् त्वदुक्तहेत्वसिद्धिः. एवं सति यत्र एकस्मिन् उपास्ये रूपे अन्यस्माद् रूपाद् अधिकाः गुणाः उच्यन्ते तत्र तेषाम् उपसंहारः उचितः इति भावः.

अत्र अयं विशेषो ज्ञेयः : उपासनाविषयेषु अखिलेषु अविशिष्टं ब्रह्मत्वं ज्ञात्वा तेषु एकतरं रूपं यः उपास्ते, तस्य तत्र सर्वे गुणाः उपसंहर्तुम् उचिताः. यस्तु अनन्तेषु विभूतिरूपेषु 'ॐ' इति अक्षरादिषु "ॐ इत्येतदक्षरं ब्रह्म" (कठोप.2।15,16) इति ज्ञात्वा उपास्ते, तस्य शाखान्तरीयापि एतदक्षरो-पासनप्रकरणोक्ताएव उपसंहर्तव्याः, न अन्ये,

तद्रूपम् अधिकृत्यैव तेषां गुणानां कथनात्. अन्यथा अतिप्रसङ्गात्. इयन्तु उपासनामार्गीया व्यवस्था उक्ता, भक्तिमार्गीयातु एतद्विलक्षणा, सा अग्रे वाच्या इति॥2॥

ननु अग्निष्टोममेव उद्दिश्य यावन्तो धर्माः तैत्तिरीयके पठ्यन्ते, न तावन्तो वाजसनेयके. तथाच त्वदुक्तरीत्या वाजसनेयिनां तद्धर्मोपसंहारोऽपि न्याय्यो भवेद्, नतु एवं सः, शिष्टाचारादिविरोधात्, तथा पञ्चाग्निविद्यामेव अधिकृत्य उक्तोऽपि षष्ठो अग्निः न छन्दोगैः शक्यते उपसंहर्तुं, तथैव आथर्वणिकैः न एकस्मिन् रूपे रूपान्तरधर्माः इति प्राप्ते, उत्तरं पठति.

स्वध्यायस्य तथात्वेन
समाचारेऽधिकाराच्च सववच्च तन्नियमः॥3॥

स्वाध्यायो वेदः. स एकमेव कर्म शाखाभेदेन भिन्न-भिन्नप्रकारकं बोधयतीति तत्प्रयुक्तः सम्यग् भूते अग्निष्टोमादिलक्षणे आचारे तत्तदङ्गाचार-नियमो अन्यूनानधिककरणलक्षणे इति अर्थः. तावद्भिरेव अङ्गैः यागसम्पत्तेः अधिककरणस्य अप्रयोजकत्वात् तावतामेव अङ्गानां करणम्.

ननु उक्तं तद्धर्माणामपि उपसंहारः त्वदुक्तरीत्या सम्भवति इत्यतः आह अधिकाराद् इति. सर्वेषां शाखिनां स्वस्वशाखोक्तकर्मण्येव अधिकारः, न परशाखोक्तेऽपि. अतोऽपि तथा नियमः. ‘च’कारात् स्वशाखोक्तात् कर्मणो अतिरिक्ततत्करणे न्यूनकरणे च “यदस्य कर्मणः” (आप.श्रौत.सू.3।12।1) इत्यादिप्रायश्चित्तश्रवणमपि तन्नियमे हेतुः समुच्चीयते. अतएव क्वचित् परशाखोक्तमपि व्यवस्थितविकल्पविषयत्वेन कल्पसूत्रे उच्यते. विकल्पेतु उभयस्य अशास्त्रार्थत्वम्, उपसंहारेतु उभयस्यापि शास्त्रार्थत्वम्. अतोऽपि न अत्र उपसंहारशङ्का. अत्र दृष्टान्तम् आह सववद् इति. यथा सवा होमाः सप्तसूर्यादयः शतौदनपर्यन्ता वेदान्तरोदितत्रेताग्न्यनभिसम्बन्धाद् अथर्वणो-दितैकाग्निसम्बन्धाच्च आथर्वणिकानामेव कार्यत्वेन नियम्यन्ते तथा तत्तच्छाखायाः तथात्वात् तत्तदुक्तएव कर्मणि तत्तच्छाखिनाम् अधिकाराच्च स्वस्वशाखोक्ताद् अन्यूनानतिरक्तकर्मकरणनियमः इति अर्थः. प्रकृतेऽपि यद्रूपोपासनाप्रकरणे यावन्तो धर्माः उक्ताः तस्मिन् रूपे तावद् धर्मवत्त्वेनैव उपासना कार्या, तद्बोधकप्रमाणानुरोधाद्, नतु रूपान्तरोपासनप्रकरणोक्ता साधारणधर्मवत्त्वेनापि. तथा सति मत्स्योपासकस्य चाप-शरादिकमपि भावनीयं स्यात्, पुरुषरूपोपासकस्य च लक्षयोजनायामश्रृङ्गादिकम्.

ननु अथर्वणोपनिषत्सु श्रीरामोपासनायां “यो वै ये मत्स्य-कूर्माद्य-वतारा भूर्भुवःसुवस्तस्मै वै नमोनमः”(रामो.ताप.उप.5) इतिवाक्येन तदितरा-वताररूपत्वम् उच्यते, तेन तद्धर्मवत्त्वमपि आक्षिप्यते. सत्यम्, आक्षिप्यते तद्धर्मवत्त्वम्. तत्र अयम् अभिसन्धिः. परमकाष्ठापन्नं ब्रह्मस्वरूपम् इदम् इति ज्ञात्वा हि उपासना कार्या. तेन एतस्यैव अन्ये अवताराः, तत्तद्रूपेण तानि-तानि कर्माणि अयमेव कृतवान् इति ज्ञेयं परं, नतु तस्मिन्नेव रूपे

अन्यावतार-धर्मवत्वमपि इति. तथाच तस्मिन् तस्मिन् अवतारे तत्तद्धर्मवान् इति श्रुत्या बोध्यते, नतु सर्वत्र इति. तत्र बाधकम् उक्तमेव. प्राणाद्युपासनासु एतावान् विशेषः : यथा कर्मणि अतिरेके प्रायश्चित्तश्रवणं बाधकं, श्रीरामस्वरूपाद्यु-पासनासु च तेन अवतारेण अकृतकर्मणः तत्र भावने अपराधो बाधकः "योऽन्यथा सन्तम् आत्मानम्" (महाभा.शान्ति.221।27) इत्यादिवाक्यं च न तथा प्राणाद्युपासनासु अधिकगुणस्य इतरत्र उपसंहारे किञ्चिद् बाधकं दृश्यतइति सः कर्तुं शक्यते इति.

ननु पुरुषादिरूपस्य विग्रहस्यैव शुद्धब्रह्मत्वाद् अयमेव अवतारान्तरेष्वपि लीलाकर्ता इति ज्ञानम् अनुपपन्नम् इति चेद्, मैवम्. धर्मिग्राहकमानेन एकस्यैव शुद्धस्यैव अनन्तरूपत्वेन सिद्धत्वात्, वस्तुनएव तथात्वाद् न काचित् शङ्का. यथा एकस्यैव अन्योन्याभावस्य अनन्तभावप्रतियोगिकतद्रूपत्वं तावत् प्रतियोगि-कात्यन्ताभावरूपत्वं च अभावप्रतियोगिकान्योन्याभावः अत्यन्ताभावरूपत्वं च अभावाभावरूपत्वेऽपि अभावरूपत्वमेव च अङ्गीक्रियते, तथा इहापि अस्तु. अभावत्वस्य अप्रयोजकत्वात्. धर्मिग्राहकमानस्यैव तथात्वात्. तच्च तैत्तिरीयो-पनिषत्सु "अतःपरं नान्यदणीयसं हि परात् परं यन् महतो महान्तं, यदेकम् अव्यक्तम् अनन्तरूपं विश्वं पुराणं तमसः परस्ताद्"(महाना.उप.1।5) इत्यादिश्रुतिरूपं प्रसिद्धमेव.

अपरञ्च, सर्वासाम् उपासनानां हि ब्रह्मविज्ञानसाधनत्वेन श्रुतौ निरूपणं क्रियते. यत्प्रकारिकोपासना विज्ञानहेतुः सः प्रकारश्च निरूप्यते. एवं सति एकस्यां शाखायां कतिपयगुणनिरूपणं, तदितरस्यां शाखायां तदतिरिक्तानामपि गुणानाम् इत्यत्र को हेतुः? इति पृच्छामः. उपसंहारेण प्राप्तिम् अनिरूपणे हेतुं चेद् ब्रवीषि, तत्र वदामः. एवं सति न्यूनगुणनिरूपिका श्रुतिः स्वोक्तानपि गुणान् न वदेत्. तथाहि उपासनानां ब्रह्मविज्ञानफलकत्वस्य निर्णीतत्वात् तस्य च एकजातीयत्वाद् घटवत् क्लृप्ताशेषसाधनसाध्यत्वाद् अशेषतन्निरूपिकैव श्रुतिः निरूपयेत्. अन्यातु उपासनायाः नाम उक्त्वा 'उपासीत' इत्येतावदेव वदेत्. गुणानाम् आक्षेपलभ्यत्वाद् न वदेत्. उपसंहार्यानपि वा वदेत्. निरूपयति च गुणान् न उपसंहार्यान्. नच स्वस्वशाखामात्राध्येतॄणाम् उपासनासिद्ध्यर्थं सर्वशाखासु उपासनप्रकारोक्तिः इति वाच्यं परशाखाऽज्ञानेन तदुक्तगुणोपसंहारस्यापि असम्भवेन उपासनायाएव असम्भवापातात्. तस्मात् स्वस्वशाखोक्तप्रकारिकोपासनायामेव सर्वेषाम् अधिकारात् तयैव ब्रह्मविज्ञानं भवति. तैत्तिरीयाणां वाजसनेयिप्रभृतीनां च अग्निष्टोमसम्पत्या स्वर्गइव. प्रकृते ब्रह्मैक्यात् तत्-तद्विज्ञानं ब्रह्मविज्ञानमेव. न हि रूपरसगन्धादिमत्यां भुवि पुरुषभेदेन एकस्यैव एकैकप्रकारकं यद् भूज्ञानं न तद् भूज्ञानम्. एतेन अनन्तधर्मवत्वं ब्रह्मणि ज्ञापितम्. तदुक्तम् "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" (श्वेता.उप.6।8) इति. अत्र 'स्वाभाविकी' इति विशेषणाद् अविद्याकल्पितत्त्वं शक्तीनां निरस्तम्.

केचित्तु आथर्वणिकानां विद्यां प्रति शिरोव्रतापेक्षणाद् अन्येषां तदनपेक्षणाद् विद्याभेदः इति प्राप्ते, उच्यते. स्वाध्यायस्य एष धर्मो न विद्यायाः, कथम् इदम् अवगम्यते? यतः तथात्वेन स्वाध्यायधर्मत्वेन समाचारे वेदव्रतोपदेशनपरे ग्रन्थे आथर्वणिका इदमपि वेदव्रतत्वेन समामनन्ति, "नैतद-चीर्णव्रतोऽधीते" (मुण्ड.उप.3।2।11) इति च अधिकृतविषयाद् 'एतत्'-शब्दात् 'अध्ययन'शब्दाच्च स्वोपनिषदध्ययनधर्मएव एषः इति निर्धार्यते. तस्माद् अनवद्यं विद्यैकत्वम् इति सूत्रार्थं वदन्ति.

स चिन्त्यते. नहि अस्य विद्याधर्मत्वं विद्याभेदकम्, उक्तन्यायेन अन्यत्रापि तदुपसंहारस्य वक्तुं शक्यत्वात्. नच अनुपसंहारार्थमेव अतद्धर्मत्वं बोध्यते इति वाच्यम्. उपक्रमोपसंहाराभ्यां विद्यैकत्वनिर्णयस्यैव दृश्यमानत्वाद् उपेक्ष्यइव भाति. ननु तदुक्तिः यथा तथा अस्तु, अतद्धर्मत्वबोधनस्य अनुपसंहारार्थकत्वे का अनुपपत्तिः? इति चेद्, उच्यते. सूत्रस्य तदुक्तार्थत्वे हि तत्तात्पर्यकल्पना. सएव च न साधीयान्. तथाहि "स्वाध्यायो अध्येतव्यः" (तैत्ति.आर.2।15) इत्यादिषु 'स्वाध्याय'शब्दस्य वेदवाचकत्वं प्रसिद्धम्. 'समाचार'शब्दस्य विहितक्रियावाचकत्वं च. तत्र उभयोरपि मुख्यो अर्थो बाध्यते. तस्मिन् सम्भवति तद्बाधस्तु अयुक्तः. किञ्च, एवं "ननु अग्निष्टोममेव उद्दिश्य" इत्यादिना उक्ताशङ्कायाः अनिवृत्तिः इति.

ननु आथर्वणोपनिषत्सु पठ्यते
"स होवाचाब्जयोनिः यो अवताराणां मध्ये श्रेष्ठो अवतारः को भविता, येन लोकाः तुष्टा देवास्तुष्टा भवन्ति, यं स्मृत्वा मुक्ता अस्मात् संसाराद् भवन्ति, कथं च अस्यावतारस्य ब्रह्मता भवति? स होवाच तं हि नारायणो देव"
(गोपा.उत्त.ता.उप.1)

इति उपक्रम्य, मथुरास्वरूपं निरूप्य निगद्यते "यत्रासौ संस्थितः कृष्णः स्त्रीभिः शक्त्या समाहितः"(तत्रैव2) इति. तेन अस्य अवतारस्य अशेषाव-ताराणां मध्ये श्रैष्ठ्यं निरूप्यते. श्रीभागवतेऽपि च "एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्"(भाग.पुरा.1।3।28) इति गीयते. पूर्वोक्तरीत्यातु सर्वतुल्यता प्रतीयतइति न एकतरनिर्धारः सम्भवति. किञ्च, ब्रह्मणो निरवयवत्वेन एकस्य अंशित्वम्, अन्येषां तदंशत्वम् इत्यपि वक्तुम् अशक्यम् इति प्राप्ते, अभिधीयते. "सत्त्वं यस्य प्रिया मूर्त्तिः"(भाग.पुरा.10।86।15), "विशुद्धसत्त्वं तव धाम शान्तम्"(तत्रैव 10।24।4) इत्यादिवाक्यैः अप्राकृतो भगवत्स्थानभूतः 'सत्त्व'नामा भगवद्धर्मरूपएव कश्चन अस्ति. यादृशेन रूपेण भगवान् कार्यं कर्तुम् इच्छति तादृग्रूपं तं प्रकटीकृत्य तस्मिन् स्वयम् आविर्भूय अयःपिण्डे वह्निवत् तत्तत्कार्याणि करोति यस्मिन्-यस्मिन् अवतारे सः-सो अंशः इति उच्यते. तत्र हि विग्रहः तत्र आविर्भूतं ब्रह्मस्वरूपं च प्रतीयते. विग्रहस्य सत्त्वात्मकत्वेन धर्मरूपत्वात्, तत्र आविर्भूतस्यैव ब्रह्मत्वात्, समुदितस्य अवतारत्वेन गणनात् तत्र एकस्यैव अंशस्य तद्रूपत्वं यत् तदेव अंशत्वम्. यत्र अधिष्ठानम् अनपेक्ष्य स्वयमेव शुद्धं साकारं ब्रह्म आविर्भवति भक्तार्थं, सः स्वयं पूर्णो भगवान् उच्यते.

एतदेव च श्रैष्ठ्यम्. अतएव सर्वतः पाणिपादान्तत्वं स्वस्मिन् स्फुटं ज्ञापयितुं तोकादिभावेन आविर्बभूव. तेन यादृग् यादृग् लीलाविशिष्टं यद्-यद्बाल्यपौगण्डाद्यवस्थाविशिष्टं तत्तद्रूपं नित्यमेव इति वयं जानीमः. नच एवं सच्चिदानन्दविग्रहोक्तिः सर्वत्र विरुद्धा भवेद् इति वाच्यम्, सत्त्वस्यापि भगवद्धर्मत्वेन सच्चिदानन्दरूपत्वाद् अविरोधात्. मन्त्राद्य-धिष्ठातृरूपाणितु विभूतिरूपाणि. एतच्च यथा तथा भक्तिहंसे प्रपञ्चितम्. तत्त्वं च "प्रकाशाश्रयवद् वा तेजस्त्वाद्"(ब्रह्मसू.3।2।28) इति न्यायेन. भगवद्धर्माणामपि सच्चिदानन्दरूपत्वाद् हीनाधिकारिणामपि उपासकानां फलप्रेप्सूनां तत्-तत्फलदानार्थम् ऐश्वर्यादिरूपेण तत्र-तत्र स्थिततत्वमेव.

ननु एकस्यैव शुद्धस्यैव अनन्तरूपत्वं भवतैव उक्तम्, अतो मत्स्यादिरूपेष्वपि न अधिष्ठानत्वेन सत्त्वं वक्तुं शक्यम्. किञ्च, एवं निराकार-स्वभावत्त्वं ब्रह्मणः सिध्यतीति सत्त्वाव्यवहितप्राकट्योक्तिरपि अनुपपन्ना इति चेद्, मा एवं, सत्त्वाधिष्ठानत्वस्य प्रमाणसिद्धत्वेन अनपनोद्यत्वात्. तच्च उक्तं "यदेकम् अव्यक्तम् अनन्तरूपम्" (महाना.उप.1।5) इत्यादि. प्राकट्यं हि भक्तिनिमित्तकम्. सातु बहुविधाइति तदनुरूपं प्राकट्यमपि तथा.
सर्गादिकार्येषु अधिकृतानां भक्तानाम् इतरासक्तिरपि अस्तीति उपाध्यन्त-रितस्नेहवत्त्वाच्च अनन्तरूपत्वेन मत्स्यादिरूपोऽपि तदर्थं तद्व्यवहितएव प्रकटीभवति. येतु भगवत्स्वरूपमात्रासक्ताः तदर्थं स्वयमेव अतद्व्यवधानेन प्रादुर्भवन्ति. एतेनैव निराकारत्वशङ्कापि निरस्ता. एतेन सोपधिस्नेहवदर्थमेव मत्स्यादिरूपप्राकट्यस्य प्रमाणसिद्धत्वाद् निरुपधितद्वदर्थमेव श्रीव्रजनाथ-प्राकट्यस्यापि तथात्वात् सोपाधिस्नेहवत्स्वपि पुरुषार्थदानस्य आनुषङ्गिकत्वात् "पुरुषविधः"(तैत्ति.उप.2।5) इति श्रुतेश्च एतदेव रूपं "रसो वै सः"(तैत्ति. उप.2।7) इत्यादिश्रुतिप्रतिपाद्यं निरूपधिस्नेहवतां विषयः. इदमेव च श्रैष्ठ्यम्. मत्स्यादिरूपन्तु सोपाधितद्वतामेव तथा. तादृक्तद्वताम्* अर्थएव प्राकट्याद् इति अध्यवसीयते. एवं सति गुणभेदस्य अप्रयोजकत्वात् सर्ववेदान्तप्रत्ययत्वं ब्रह्मणो निष्प्रत्यूहम्॥3॥
दर्शयति च॥4॥

वेद्यैकत्वेन विद्यानाम् एकत्वं श्रुतिः दर्शयति "सर्वे वेदा यत् पदमामनन्ति"(कठोप.2।15) इत्यादिना. उपासनाप्रकारभेदेन उपास्यभेददर्शने दोषं च दर्शयति. "यदा ह्येवैष एतस्मिन् उदरम् अन्तरं कुरुते, अथ तस्य भयं भवति" (तैत्ति.उप.2।7) इति. 'उद्'इति अव्ययम् अप्यर्थकम्. तथाच, 'अरम्' अल्पमपि अन्तरं कुरुते इति अर्थः॥4॥
उपसंहारो अर्थाभेदाद् विधिशेषवत् समाने च॥5॥

ननु पूर्वसूत्रोक्तरीत्या गुणोपसंहारो न क्वचिदपि प्राप्तावसरः इति सिद्धम्. दृश्यते च उपसंहारः श्रीरामोपनिषत्सु "यो वै ये मत्स्यकूर्माद्यवताराः" (रामोत्त.ताप.उप,5) इत्यादिना उक्तावताररूपत्वस्य श्रीरामे "नमस्ते रघुवर्याय रावणान्तकराय

च”(भाग.पुरा.10।40।20) इत्यादिषु ‘ते’ इति युष्मच्छब्द-विषये श्रीव्रजनाथे रघुवर्यत्वादेः इति आशङ्क्य, तत्प्रयोजकं रूपम् आह उपसंहारः इत्यादिना. उक्तस्थलादिषु यः उपसंहारः, सत्त्वर्थस्य पदार्थस्य भगवल्लक्षणस्य उभयत्रापि अभेदाद् इति अर्थः. ननु एवं सति मत्स्ये शरचापादिकं पुरुषे च शृङ्गादिकं भावनीयं स्याद् इति चेद्, तत्र आह विधिशेषवद् इति. यथा विधिविशेषाणाम् अग्निहोत्रादीनाम् अग्निहोत्रत्वादिलक्षणे धर्मे समानेऽपि सति स्वस्वशाखोक्तप्रकारकस्यैव करणं, न अन्यशाखोक्तधर्मोपसंहारः, एवम् इहापि तत्तदवतारोपासकस्य तत्तदसाधारणधर्मवत्वेनैव उपासनं, न अन्यावतारधर्म-वत्वेनापि इति अर्थः. यद्वा मत्वर्थीयो ‘वत्’प्रत्ययो अत्र. तथाच विधिशेषो अर्थवादः, तद्वत् सत्समानञ्च भवति यत्, तत्र च उपसंहारः इति अर्थः.

अत्र एवं ज्ञेयम् : एकस्यां श्रुतौ यस्य कर्मणो यत् फलम् उच्यते तदितरस्यां तस्यां तस्यैव कर्मणः तदितरत् फलम् उच्यते. एवं सति द्वितीय-श्रुत्युक्तफलकामनयापि तदेव कर्म कर्तव्यं भवतीति तत्फलसाधकत्वस्य उपसंहारः. यथा “यद् वैश्वदेवेन यजते, प्रजाएव तद् यजमानः सृजते”(तैत्ति. ब्राह्म.1।4।11) इति एका श्रुतिः अस्य यागस्य प्रजाफलकत्वम् आह. “यद् वैश्वदेवेन यजते, अग्निमेव तत् संवत्सरम् आप्नोति, तस्माद् वैश्वदेवेन यजमानः संवत्सरीणां स्वस्तिम् आशास्त इत्याशासीत”(तैत्ति.ब्राह्म.1।4।11) इति द्वितीया श्रुतिः आह तत्रोक्तरीतिः इति.

यत्तु विधिशेषाणाम् अग्निहोत्रादिधर्माणां तदेव एकम् अग्निहोत्रादिकर्म सर्वत्र इति अर्थाभेदाद् उपसंहारः इति. तद् न साधु, अग्निहोत्रादेः तत्तच्छाखिनां स्वस्वशाखोक्तप्रकारकस्यैव करणाद् अतिरेके प्रायश्चित्तश्रवणाद् न अन्य-शाखोक्तधर्मोपसंहारः शक्यवचनः. प्राणाद्युपासनासु अधिकगुणस्य इतरत्र उपसंहारे न किञ्चिद् बाधकं दृश्यतइति तत्र सः कर्तुं शक्यते इति ‘च’कारेण तदादयः सङ्गृह्यन्ते. वस्तुतस्तु पूर्वसमुच्चयार्थः ‘च’कारः. शाखान्तरोक्त-धर्मोपसंहारप्रयोजनाभावस्य “स्वाध्यायस्य तथात्वेन”(ब्रह्मसू.3।2।3) इत्यत्र निरूपितत्वाद्. उपसंहारबीजम् अनेन सूत्रेण उक्तम्॥5॥

अन्यथात्वं शब्दाद् इति चेद् न अविशेषात्॥6॥

ननु उपासनासु उक्तन्यायेन गुणोपसंहारो हि उपास्यानां ब्रह्मत्वेन ऐक्ये सति भवति. मिथोविरुद्धानां गुणानां शान्तत्व-क्रूरत्व-तपोभोगादीनाम् उपसंहारे क्रियमाणे स्वरूपाणाम् अन्यथात्वम् अब्रह्मत्वं स्याद् इति अर्थः. तत्र हेतुः शब्दाद् इति. एकत्वैकरसत्वादिधर्मनिरूपकश्रुतेः इति अर्थः. समाधत्ते न अविशेषाद् इति. एकरसत्वं यथा श्रुतिबलाद् निर्णीयते, तथा विरुद्धधर्मवत्त्वमपि ततएव तथा इति अर्थः. तेन वस्त्वेव तत् तादृङ् मन्तव्यम् इति भावः॥6॥

न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्॥7॥

पूर्वसूत्रोक्ताशङ्कानिराकरणं वा विकल्पेन पूर्वोक्तात् प्रकारान्तरेण कर्तव्यम् इति आह न वा इति. तमेव आह प्रकरणभेदाद् इति. अत्र अयं भावः : श्रुतिप्रामाण्याद् यावत्तदुक्तधर्मवद् ब्रह्म इति मन्तव्यम्. एवं सति यादृशो अधिकारिणो यादृग् वेद्यं रूपं, तादृशस्य तस्य तादृक् तद् निरूपयति प्रकरणभेदेन. तथाच ज्ञानप्रकरणे ज्ञानाधिकारिणो यादृग् रूपं ज्ञेयं, तादृक् तस्मै निरूपयति "अदृश्यम् अग्राह्यम्" (मुण्ड.उप.1।1।6) इत्यादिरूपा श्रुतिः. भक्तिप्रकरणेतु भक्तेः बहुविधत्वाद् यादृग् यादृग् भक्तानां यादृग् यादृक् तदनुभवविषयः, तादृक्-तादृक् तद् निरूपयति आथर्वणोपनिषद् इति. अत्र दृष्टान्तम् आह परोवरीयस्त्वादिवद् इति. "अस्मिन् मे लोके अर्धुकं स्याद्" (तैत्ति.संहि. 6।2।3) इति कामवतः आराग्रावान्तरदीक्षा पूर्वम् उक्ता. तदग्रे "परोवरीयसीमवान्तरदीक्षाम् उपेयाद्, यः कामयेतामुष्मिन् मे लोके अर्धुकं स्यादिति चतुरोग्रे अथ त्रीनथ द्वावथैकमेषा वै परोवरीयस्यवान्तरदीक्षा" (तैत्ति. संहि.6।2।3) इति पठितम्. अस्य दीक्षाप्रकरणे पठितत्वाद् दीक्षां विना उक्तरीत्या व्रतेतु न परोवरीयस्त्वम्, एवं भक्तिप्रकरणीयानाम् अथर्वणोपनि-षदाद्युक्तरूपाणां न भक्तिरहितोपास्यत्वम्. ज्ञानसाधनत्वेन विष्णुस्मरणादावपि क्रियमाणे भक्तित्वं न इति.

अथवा. पूर्वसूत्रेण सर्वरूपेषु मिथः सर्वधर्माणाम् उपसंहारः प्राप्तः. सच ऐकान्तिकभक्तानुभवविरुद्धः इत्यत्र व्यवस्थितविकल्पम् आह न वा इत्यादिना. सर्वेषु अवतारेषु भगवदवतारत्वेन साधारणी भक्तिः यस्य, सः सर्वत्र उपसंहारं करोतु नाम. यस्तु एकान्ती, तस्य स्नेहोत्कर्षेण अन्तःकरणम् एकस्मिन्नेव रूपे पर्यवसितमिति रूपान्तरम् अन्तःकरणारूढं न भवत्येवेति न उपसंहार-सम्भावनापि इति. तदेतद् उच्यते न वा इत्यनेन. तत्र हेतुः प्रकरणभेदाद् इति. श्रुत्यादिषु तत्तदधिकरणम् उद्दिश्य तत्तत्प्रकरणम् उक्तम्. तेन अत्र प्रकरणपदेन* अधिकारः उच्यते. एवं सति उपासकादिभ्यः उक्तरीत्या उत्कृष्टाधिकाराद् इति अर्थः सम्पद्यते, परोवरीयस्त्वादिवद् इति. परस्मात् परश्च, वराच्च वरीयान् इति परोवरीयान् उद्गीथः. तथाच अक्ष्यादित्यादिगतहिरण्यश्मश्रुत्वादिगुणविशि-ष्टोपासनायापि उद्गीथोपासनत्वेन साम्येपि सर्वोत्कृष्टत्वेनैव उद्गीथो भासतइति न हिरण्यश्मश्रुत्वादिगुणोपसंहारः परोवरीयस्त्वगुणविशिष्टोद्गीथो-पासनायाम्. एवं प्रकृतेऽपि इति॥7॥

सञ्ज्ञातश्चेत् तदुक्तम् अस्ति तु तदपि॥8॥

एकान्त्यनेकान्तिनोरपि श्रीरामोपासकत्वादिसञ्ज्ञातु अविशिष्टेति एकान्तिनोऽपि उपसंहारो युक्तः इति आशङ्का. उत्तरन्तु "न वा प्रकरणभेदाद्"(ब्रह्मसू.3।3।7) इति अनेनैव उक्तम्. सञ्ज्ञातु लौकिकी, अधिकारस्तु आन्तरः. सएव बलीयान् इति. सञ्ज्ञैकत्वस्य हेतोः अन्वय-व्यभिचारम् आह अस्तितु तदपि इति. प्रमितभेदेष्वपि उपासनेषु परोवरीयस्त्वादिषु सञ्ज्ञैकत्वम् उद्गीथोपासना इति अस्ति इति अर्थः॥8॥

व्याप्तेश्च समञ्जसम्॥9॥

अथ इदं विचार्यते. उपास्येषु रूपेषु बाल्यपौगण्डादिकमपि उच्यते. तथा सति विग्रहे न्यूनाधिकभावः आपततीति तत्र उक्तं सच्चिदानन्दत्वम् अनुपपन्नं स्यात्, तेषां सदैकरूपत्वात्. प्राकृतत्वे च सर्वम् असमञ्जसं स्याद् इति प्राप्ते, आह व्याप्तेः इति. "सर्वतः पाणिपादान्तम्" (श्वेता.उप.3।36) इत्यादिश्रुतेः साकारमेव व्यापकम् इति. 'च'कारात् "सर्वरसः" (छान्दो.उप.3।14।2) इति श्रुत्या रसात्मकत्वेन भक्तानां यादृग्रूपेण लीलारसानुभवः तादृग्रूपं क्रमेण योगमायापसारणेन प्रकटीकरोति इति बाल्यादिभावोपपत्तेः सर्वम् उपपन्नम् इति अर्थः. तेन यावदुक्तधर्मवद् ब्रह्म इति सिद्धम्॥9॥

नन्नु ब्रह्मधर्मत्वेन* ते सर्वे नित्याः वाच्याः, ते च तत्तद्भक्तविशिष्टाः, तत्रच एकस्यैव भक्तस्य पौर्वापर्येण अनेकलीलासम्बन्धित्वं श्रूयते, तथाच पूर्वलीलायाः नित्यत्वेन तत्सम्बन्धिभक्तस्यापि तथात्वं वाच्यम्. एवं सति तस्यैव अग्रिमलीलासम्बन्धो अशक्यवचनः. तथावचनेतु पूर्वलीलायाः नित्यत्वं भज्येत. नित्यत्वेतु अग्रिमलीलासम्बन्धिनो भिन्नत्वं स्यात्. तच्च अनुभवतदावेदकमान-विरुद्धम् इत्यतः उत्तरं पठति.(*'धर्मवत्वेन' इति पुरु.पाठः)

सर्वाभेदाद् अन्यत्रेमे॥10॥

लीलामध्यपातिनां सर्वेषां पदार्थानां ब्रह्मणा सह अभेदाद् ब्रह्मणश्च एकत्वात् पूर्वलीलातो अन्यत्र उत्तरलीलायामपि* इमे पूर्वलीलासम्बन्धिनएव ते इति अर्थः. अत्र इदम् आकूतं:"रसो वै सः"(तैत्ति.उप.2।7) इति श्रुत्या "सर्व-रसः"(छान्दो.उप.5।14।2) इति श्रुत्या च सर्वरसात्मकत्वं ब्रह्मणो निर्णीतम्. तथाच यस्य रसस्य ये विभावानुभावादिरूपाः, तैः सः रसः सम्पद्यते. आतानवि-तानात्मकतन्तुभिः पटइव. अतः तत्तादात्म्यं रसस्य इति सर्वाभेदो निष्प्रत्यूहः इति.

ननु विरुद्ध-दिक्कयोः एकजातीयभाववतोः भक्त्यतिशयेन युगपदेकजातीय-लीलासहित-भगवत्प्रादुर्भावे भगवतो व्यापकत्वेन एवम्प्रा-दुर्भावस्य उपपन्नत्वेऽपि लीलापदार्थानाम् अव्यापकत्वाद् युगपदाविर्भावो अनुपपन्नः. भक्तयोः समानत्वाद् भक्तिमार्गविरोधापाताद् विनिगमकाभावाच्च एकत्र मायया प्रदर्शयति इति च न वक्तुं युक्तम् इति आशङ्कापि एताभ्यां सूत्राभ्यां निरस्ता इति ज्ञेयम्. ब्रह्मणो व्यापकत्वाद् लीलायाश्च तेन सह अभेदात् तथात्वाद् एकस्मै भक्ताय यथा ब्रह्मणा सह लीलापदार्थाः आविर्भवन्ति, तथैव तदैव अन्यत्रापि भक्तसमानदेशे आविर्भवन्ति इति सर्वसामञ्जस्यात्॥10॥

ननु व्यापकत्ववत् पूर्णानन्दैश्वर्यवीर्यादयोऽपि धर्माः तेषु प्रतीता भवेयुः, नच एवम् अस्ति, दुःखसम्भावनायां प्रभुमेव प्रार्थयन्ति यतः, एवं सति व्यापकत्वमपि न वक्तुं शक्यं, तुल्यत्वाद्, अतः उत्तरं पठति.

आनन्दादयः प्रधानस्य॥11॥

पूर्णानन्दैष्वर्यादयः प्रधानस्य धर्मिणो ब्रह्मणएव धर्माः. लीलापदार्थास्तु ब्रह्मधर्मत्वेन व्यापकाः उच्यन्ते. व्यापकस्य धर्मिणो अनागन्तुकधर्मस्य व्यापकत्वनियमात्. नहि धर्मेषु पूर्णानन्दत्वादयः सम्भवन्ति. धर्मित्वापत्या धर्मत्वव्याहतेः. अतएव अत्र 'प्रधान'पदम् उपात्तं, गुणभावेन लीलापदार्थानाम् आविर्भावः इति ज्ञापयितुम्॥11॥

प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे॥12॥

ननु उपासकस्य प्रियत्वादिप्रकारकज्ञानक्रमम् आदाय प्रियत्वादिधर्माणां शिरस्त्वादिरूपत्वम् आनन्दमयाधिकरणे निरूपितमिति लीलास्थानामपि प्रियत्वादिज्ञानस्य सत्त्वाद् अत्रापि स्वरूपोपासकस्य प्रियशिरस्त्वादिधर्माणाम् उपसंहारः कार्यः इति आशङ्क्य परिहरति प्रियशिरस्त्वाद्यप्राप्तिः इति. चित्तशुद्धितारतम्यहेतुकं प्रियत्वादिज्ञानं लीलास्थानां चित्तशुद्ध्यपेक्षाभावाद् न सम्भवतीति न तेषाम् अत्र उपसंहारः कार्यः इति अर्थः.

अथवा, ननु आनन्दमयोपासनाम् अथर्वणोपनिषदुक्तपञ्चरात्राद्या-गमोक्तप्रकारेण कुर्वतः पुरुषरूपे पक्षाद्युपसंहारस्य अयुक्तत्वाद् आनन्दमया-धिकरणे तद्रूपस्यैव उक्तत्वात् पुरुषरूपः कथम् आनन्दमयः? तथात्वे वा कथं न उक्तोपसंहारः? अपरञ्च, मोदप्रमोदयोः उपचितानुपचितानन्दरूपयोः युगपत्-सत्त्वेन देशभेदेनापि भिन्नत्वाद् नित्यानन्दैकरसे ब्रह्मणि तादृशरूपकथनम् अनुपपन्नम् इति आशङ्क्य परिहरति प्रियशिरस्त्वादि इति.

1यदि अथर्वणोपास्यात् प्रियशिरस्त्वादिविशिष्टस्य भेदः स्यात्, तदा तदप्राप्तिः स्यात्, न च तथा इति प्रियशिरस्त्वादिकम् 2उपासनामार्गीयस्य आथर्वणिकादेः उपसंहार्यमेव इति अर्थः. चित्तशुद्धितारतम्यहेतुकं प्रियत्वादि-ज्ञानम् इति पक्षे परोक्षवादपक्षेऽपि तत्र भेदाभावात् मोदप्रमोदयोः न त्वदुक्तरूपत्वम् इति अर्थः. ब्रह्मधर्माएव भिन्ना इति उपासनार्थं तान् आदाय शिरःपाण्यादि निरूप्यतइति तत्रैव निरूपितम् अस्माभिः. यद्यपि आनन्दमयाधिकरणएव अस्य अर्थस्य उक्तत्वाद् न इयं शङ्का सम्भवति, तथापि गुणोपसंहारप्रसङ्गे मिथ्यावादिनः आपाततः शङ्का सम्भवतीति आचार्येण उक्त्वा निरस्ता॥12॥

ननु उपास्यरूपस्य अविरुद्धाएव गुणाः उपसंहर्तव्याः, नतु विरुद्धाः. तथाच पुरुषरूपे पक्षादि विरुद्धमिति न तदुपसंहार्यम् इति आशङ्क्य आह.

इतरे त्वर्थसामान्यात्॥13॥

इतरे पुरुषरूपे विरुद्धत्वेन ये भासमानाः धर्माः तेऽपि उसंहर्तव्याः. तत्र विरोधव्यवच्छेदज्ञापनाय 'तु'शब्दः. तत्र हेतुः अर्थसामान्याद् इति. अर्थः पदार्थः आनन्दमयत्वलक्षणः तस्य समानत्वाद् एकत्वाद् इति अर्थः॥13॥

अथ आनन्दमयाधिकरणे उक्तप्रकारेण ये प्रियत्वादिधर्माः, तेषामेव उपसंहारः कार्यः नतु पुरुषरूपे पक्षादीनामपि इति अग्रिमं पठति.

आध्यानाय प्रयोजनाभावात्॥14॥

आनन्दस्वरूपस्य यावन्तो धर्माः भक्तिमार्गीयाः परोक्षवादेन उच्यन्ते प्रियत्वप्राधान्यादयः तेषां सर्वेषां ध्यानम् आसमन्ताद् ध्यानं, तदर्थं ये धर्माः उपयुक्ताः तएव उपसंहर्तव्या, न अन्ये. तत्र हेतुः प्रयोजनाभावाद् इति. ध्यानपदार्थस्य तावद्भिरेव सिद्धेः अधिकोपसंहारे तथात्वाद् इति अर्थः॥14॥

अन्येषाम् अनुपसंहारे हेत्वन्तरमपि आह

आत्मशब्दाच्च॥15॥

"प्रियमेव"(तैत्ति.उप.2।5) इत्यादिना परोक्षवादेन उक्तानां प्रियप्राधान्यादीनामेव भावना कार्या, नतु यथाश्रुतानां शिरःपक्षादीनां, तेषाम् अविवक्षिततत्वात्. तत्र हेतुः आत्मशब्दाद् इति. "आनन्द आत्मा"(तैत्ति.उप.2 ।5) इत्यनेन पूर्वोक्तानां प्रियप्राधान्यादीनां रसात्मकानाम् आत्मा स्वरूपम् आनन्दः इति उक्तम्. अग्रे "रसो वै सः"(तैत्ति.उप.2।7) इति वक्ष्यमाणत्वात् तस्य च स्थायिभावात्मकत्वात् तस्यैव आनन्दमयत्वाच्च प्रियविषयकलीला-मध्यपातिभक्तज्ञानप्रकाराणामपि रसात्मकत्वेन आन्दरूपत्वात् तेषाम् उपासनातु उत्तमाधिकाराभावात् शिरःपक्षादिरूपेण कार्या इति भाववती श्रुतिः तथा न्यरूपयत्. एतेन यत्परम्परासम्बन्धेऽपि उपास्यत्वं तद् अस्य महत्त्वं कियदवधि वाच्यम् इति ज्ञाप्यते. एवं सति उपासनामार्गीयोपास्यं विभूतिरूपं, नतु मूलरूपम्. "यन्न योगेन"(भाग.पुरा.11।12।9) इति वाक्याद् इति ज्ञेयम्॥15॥

इति तृतीयाध्याये तृतीयपादे प्रथमं सर्ववेदान्तप्रत्ययाधिकरणम्॥1॥

तैत्तिरीयके अन्नमयादिनिरूपणे पुरुषविधत्वं तेषां निरूप्य, "तस्यैषएव शारीर आत्मा यः पूर्वस्य"(तैत्ति.उप.2।3) इति सर्वत्र निगद्यते. तत्र आनन्द-मयपर्यन्तं शारीरात्मत्वकथनाद् भवति संशयः. शरीराभिमानी जीवएव कश्चिद्, उत ब्रह्मैव? तत्र 'शारीर'पदाद् जीवएव भवितुम् अर्हति. तथा सति आनन्द-मयस्यापि ब्रह्मत्वं न उपपद्यते. उच्यते च भार्गव्यां विद्यायां "अन्नं ब्रह्मेति व्यजानाद्"(तैत्ति.उप.3।2) इत्यारभ्य आनन्दमयपर्यन्तम् "आनन्दो ब्रह्मेति व्यजानाद्"(तैत्ति.उप.2।6)इत्यन्तया श्रुत्या ब्रह्मत्वम् इति उभयतः पाशारज्जुः इति प्राप्ते, आह.

## आत्मगृहीतिर् इतरवद् उत्तरात्॥16॥ (3।3।2)

इतरवद् जीववद् आत्मगृहीतिः आत्मग्रहणम् "तस्यैष एव शारीर आत्मा" (तैत्ति.उप.2।3) इति यत् तद् उत्तराद् "यः पूर्वस्य" (तैत्ति.उप.2) इति सर्वत्र उक्तत्वात् सर्वेभ्यः उत्तर आनन्दमयः तस्माद् हेतोः इति अर्थः. अनन्मयादिषु सर्वेषु आनन्दमयस्यैव उक्तः तत्तच्छरीराभिमानित्वात् तथा. एतद् यथा तथा आनन्दमयाधिकरणे (1।1।11-18) प्रपञ्चितम् अस्माभिः.

अथवा "अन्योऽन्तर आत्मा" (तैत्ति.उप.2) इति अन्नमयाद् अन्यत्र सर्वत्र उक्तत्वात् पूर्वपूर्वनिरूपितो यः, सः इतरः इति उच्यते. तथाच, "यः पूर्वस्य" इति श्रुत्या

इतरवत् पूर्वनिरूपितवत् प्रकृतस्यापि आत्मग्रहणं कथनं यत् तदुत्तराद् इति पूर्ववत्॥16॥
अन्वयाद् इति चेत् स्याद् अवधारणात्॥17॥

ननु सर्वत्र "अन्योऽन्तर आत्मा" (तैत्ति.उप.2) इति श्रुत्या प्रत्येकम् अन्नमयादीनां भेदनिरूपणात् 'शारीर'पदाच्च भिन्नो-भिन्नो जीवएव आत्मा शरीराभिमानी सर्वत्र उच्यते, आनन्दमयेऽपि तथोक्तिः या, सातु आनन्दमयस्य ब्रह्मत्वेन व्यापकत्वेन सर्वत्र अन्वयात् सर्वेषु शरीरेषु सम्बन्धाद् इति आशङ्क्य, तन्निरासाय उक्ते अर्थे उपपत्तिम् आह स्याद् इत्यादिना. स्याद् आनन्दमयएव उक्तसर्वशरीराभिमानी भवति इति अर्थः. तत्र हेतुः अवधारणाद् इति. "एष एव" (तैत्ति.उप.2) इति 'एव'कारेण इतरनिषेधपूर्वकम् आनन्दमयस्यैव आत्मत्वनिर्धारणाद् इति अर्थः॥17॥2॥
इति तृतीयाध्याये तृतीयपादे द्वितियम् आत्मगृहीति अधिकरणम्॥2॥

## कार्याख्यानाद् अपूर्वम्॥18॥ (3।3।3)

तैत्तिरीयके पठ्यते "तस्माद् वा एतस्माद् आत्मनः आकाशः सम्भूतः" (तैत्ति.उप.2।1) इति उपक्रम्य महाभूतसृष्टिम् उक्त्वा आम्नायते "पृथिव्या ओषधय. ओषधीभ्यो अन्नम्. अन्नात् पुरुषः. स वा एष पुरुषो अन्नरसमयः" (तैत्ति.उप.2।1) इति. एतदग्रे अन्नस्य उत्पत्ति-स्थिति-लयहेतुत्वम् उक्त्वा, "ये अन्नं ब्रह्मोपासते" (तैत्ति.उप.2।1) इति उच्यते. भृगु-वरुणसंवादे च "अन्नं ब्रह्मेति व्यजानाद्" (तैत्ति.उप.3।2) इति उच्यते. तत्र "स वा एष पुरुषो अन्नरसमयः" (तैत्ति.उप.2।1) इत्यनेन पूर्वोक्तएव पुरुषः उच्यते, उत तद्भिन्नः? इति भवति संशयः. किम् अत्र युक्तम्? पूर्वोक्तएव इति. यतः पूर्वोक्तस्यैव "स वा एष" इत्यनेन प्रत्यभिज्ञानं प्रतीयते. तत्र ब्रह्मत्वेन उपासना कार्या इति अभिप्रायेण ब्रह्मत्वेन स्तूयते इति प्राप्ते, आह कार्याख्यानाद् अपूर्वम् इति. पूर्वस्य अन्नकार्यस्य पुरुषस्य आख्यानात् "स वा एष" इत्यनेन अग्रिमश्रुतिभिः ब्रह्मत्वेन प्रतिपिपादयिषितम् अन्नरूपमेव उच्यते, नतु पूर्वम् इति अर्थः. "स वा एष" इति प्रत्यभिज्ञानम् इति यद् उक्तं तद् न, "अन्नात् पुरुषः" इत्यन्तेन आधिभौतिकतन्निरूपणात् "स वा एष" इत्यनेन आध्यात्मि-कतन्निरूपणाद् उभयोश्च भेदात्. अतएव संशयाभावाय आह. वै निश्चयेन. एष वक्ष्यमाणः पुरुषः सः आध्यात्मिकत्वेन प्रसिद्धो अन्नरसमयः इति. अन्यथा ब्रह्मात्मकतपोलक्षणसाधनेन अधिकारे सम्पन्ने "अन्नं ब्रह्मेति व्यजानाद्" (तैत्ति.उप.3।2) इति न वदेत्. *न च तदपि तत् तथात्वेन स्तूयते इति वाच्यम्, श्रुतेः प्रतारकत्वापत्तेः. आनन्दमयान्तम् एवमेव निरूपणाच्च. अतएव अस्यापि आत्मा अग्रे निरूपितो "यः पूर्वस्य" इति. सतु आधिदैविक आनन्दमयः.

अथवा, वाजसनेयिशाखायाम् "आत्मेत्येवोपासीत" (बृहदा.उप.1।4 ।7) इति उपक्रम्य "तदेतत् प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयो अन्यस्मात् सर्वस्माद् अन्तरतरं यद् अयम् आत्मा"(तत्रैव 1।4।8) इति. एतदग्रे अन्यस्य प्रियत्वं निराकृत्य "ईश्वरो हि तथा स्याद्

आत्मानमेव प्रियम् उपासीत"(तत्रैव) इति पठ्यते. अत्र आत्मौपाधिकत्वात् सर्वत्र प्रियत्वस्य 'आत्म'पदेन जीवात्मनएव प्रियत्वेन उपासना विधीयते उत 'ईश्वर'पदात् परमात्मनः? इति भवति संशयः. किम् अत्र युक्तम्? जीवात्मनएव इति. कुतः? यथा पुत्रादेः आत्मौपाधिक-प्रियत्वोक्त्या जीवात्मनएव प्रियत्वम् उच्यते अन्यत्र श्रुतौ, तथा इहापि "प्रेयः पुत्रात्" (तत्रैव 1।4।8) इत्यादिकथनाद् जीवात्मैव भवितुम् अर्हति इति प्राप्ते, आह कार्याख्यानाद् अपूर्वम् इति. इतः पूर्वम् आम्नायते "प्राणन्नेव प्राणो नाम भवति वदन् वाक् रूपं पश्यंश्चक्षुः श्रृण्वन् श्रोत्रं मन्वानो मनस्तानि अस्यैतानि कर्मनामान्येव" (तत्रैव 1।4।7) इति. तथाच प्राणन-वदनादिकार्यैः कृत्वा प्राण-वागादित्वेन एकस्यैव आत्मनः आख्यानात् कथनाद् अपूर्वं, पूर्वन्तु पुत्रवित्ताद्यभिमानदशायां "न वा अरे पत्युः कामाय पतिः प्रियो भवति" (तत्रैव 2।4।5) इत्यादिना यत् प्रियत्वेन उच्यते, तस्माद् भिन्नम् 'आत्म'शब्दवाच्यम् अत्र इति अर्थः. लोके हि प्राणवायुवागिन्द्रियादीनामेव तत्-तच्छब्दवाच्यता नतु जीवस्य, अतएव अग्रे श्रुतिः आह "ईश्वरो हि तथा स्याद्" (तत्रैव 1।4।8) इति. अतएव "प्रेयो अन्यस्मात् सर्वस्माद् अन्तरतरं यद् अयम् आत्मा" (तत्रैव 1। 4।8) इति आह. अन्तरो जीवात्मा, ततोऽपि अतिशयेन अन्तरम् अन्तरतरं पुरुषोत्तमस्वरूपमेव भवितुम् अर्हति इति. एतेन विग्रहस्यैव आत्मरूपत्वं सिध्यति. तेन अविकृतत्व-परमानन्दत्वादयोऽपि धर्माः उपसंहर्तव्याः॥18॥

ननु विग्रहे चक्षुःश्रोत्रादीनां वैलक्षण्यप्रतीतेः आत्मनश्च एकरसत्वाद् उक्तकर्मनामवत्वं ब्रह्मणि अनुपपन्नम् इति आशङ्क्य उत्तरं पठति.

समान एवं च अभेदात्॥19॥

चो अप्यर्थे. तथाच एवमपि सति श्रोत्र-चक्षुरादिवैलक्षण्यप्रतीतावपि सति समान एकरूपएव, नतु विषमः. तत्र हेतुः अभेदाद् इति. चक्षुरादीनां ब्रह्मत्वेन परस्परम् अभेदाद् इति अर्थः.

अत्र इदम् आकूतम् : "तन्त्वौपनिषदं पुरुषं पृच्छामि" (बृहदा.उप. 3। 92।6) इति श्रुतेः उपनिषद्वेद्यमेव ब्रह्मस्वरूपम्. ताश्च "प्राणन्नेव प्राणो भवति वदन् वाक्" (तत्रैव 1।4।7) इत्यादिरूपाः प्रतिनियतेन्द्रियग्राह्यान् अर्थान् स्वरूपेणैव गृह्णद् ब्रह्म तत्-तच्छब्दवाच्यं भवति इति वदन्ति. तद्वाच्यता च व्यवहार्यत्वे. सच "तदेतत् प्रेयः पुत्राद्" (तत्रैव 1।4।8) इत्यादिवाक्यैकवाक्यतया निरुपधिस्नेहवतामेव व्यवहार्यः इति ज्ञाप्यते. सच आविर्भूते अवताररूपएव सम्भवति. एवं सति तत्र भक्तैः भगवद्विग्रहे तत्तदवयवेषु भेदेन यथा-यथा व्यवह्रियते, तथा-तथैव तदेकमेव अखण्डसच्चिदानन्दरूपं ब्रह्म इति अर्थः सम्पद्यते. एवंविधो लोके न प्रसिद्धः इति असम्भावना स्याद्. तदभावाय अग्रे श्रुतिः आह "ईश्वरो हि तथा स्याद्" (तत्रैव 1।4।8) इति. एतेन आविर्भूतरूपे व्यापकत्वैकरसत्वसच्चिदानन्दत्वादयो धर्माः उपसंहर्तव्या, अनाविर्भूतेऽपि इति स्थितम्. एवं सति आविर्भावे अनाविर्भावे-ऽपि ईश्वरः समानः. न हि आविर्भावे कांश्चन् आगन्तुकान्

धर्मान् आदाय आविर्भवति इति वक्तुं शक्यम् अनाविर्भूतस्यापि. एवम् आविर्भूतप्रकारेणैव अभेदाद् इत्यपि सूत्रार्थः सूत्रकाराभिमतः इति ज्ञातव्यम्. 'च'कारेण विरुद्ध-सर्वधर्माश्रयत्वं समुच्चीयते. एवं साक्षाद् आविर्भूते भगवद्रूपे पूर्णानन्तधर्माः तदुपासकेन उपसंहर्तव्याः इति सिद्धम्॥19॥

अथ यत्र कार्यचिकीर्षया जीवे स्वयम् आविशति, तदावेशात् तद्धर्मापि केचित् तस्मिन् आविर्भवन्ति तत्र उपासकेन अखिलब्रह्मधर्मोपसंहारः कर्तव्यः न वा? इति शङ्कासमाधानं विकल्पेन आह सूत्राभ्याम्. तत्र आदौ विधिपक्षम् आह.

सम्बन्धादेवम् अन्यत्रापि॥20॥

अन्यत्रापि जीवेऽपि एवं ब्रह्मणीव उपासना कार्या. तत्र हेतुः सम्बन्धाद् इति. अयोगोलके वह्नेरिव तस्मिन् आवेशलक्षणः सम्बन्धो अस्ति इति, तत्त्वेन व्यपदेशाच्च तथा इति अर्थः.

अत्र एवं ज्ञेयम् : अयन्तु जीवः, अत्र आविष्टं भगवन्तम् अहम् उपास इति जानाति चेत् तदा न सा जीवगामिनि उपासना किन्तु ब्रह्मगामिन्येव. तत्र अखिलधर्मोपसंहारे न किञ्चिद् बाधकम्. यत्र ब्रह्मत्वेनैव ज्ञात्वा उपास्ते तत्रापि "तं यथा यथोपासते तथैव भवति तद्धैतान् भूत्वा अवति" (मुद्गल.उप.9।3) इति श्रुतेः गुर्वादौ जीवत्वबुद्धिनिषेधाच्च तथा. तत्र यादृग् उपासकः तदुपासना-सिद्ध्यर्थं तत्फलदानार्थं च तादृग् रूपो भगवान् आविशति इति च तथा॥20॥

यस्तु अन्तरङ्गं भगवद्भक्तं हृदि आविर्भूतभगवत्कं ज्ञात्वा "एतद् भजनेन अहं भगवन्तं प्राप्स्यामि" इति ज्ञात्वा तमेव भजते सः भक्तिमार्गीयइति भक्तहृदि आविर्भूते रूपे उपसंहरो धर्माणां तेन न कार्यः इति अग्रिमं पठति.

न वाविशेषात्॥21॥

अनुपसंहारे हेतुः अविशेषाद् इति. अस्य भक्तभक्तत्वेन तद्भजन-रसास्वादनेन विस्मृततदाविष्टभगवत्कत्वेन तन्निरपेक्षत्वेन वा तदाविष्ट-भगवति गुणोपसंहारे अनुपसंहारे वा भक्तोपासनायां विशेषाभावाद् इति अर्थः. अनुपसंहारस्य अत्र बाधकत्वाभावज्ञापनाय 'वा'शब्दः. विशेषाद् इति वा. पूर्वं विहितत्वेन भगवदाकारादिषु भजनं कुर्वन्नपि उक्तरूपभक्तसङ्गेन तद्भजनेन च पूर्वस्माद् विशिष्टं रसम् अनुभूतवानिति रसास्वादे विशेषाद् गुणोपसंहारं स न करोतीति अनुवादः. विहितत्वेन गुणोपसंहारपूर्वकोपासनायां नीरसत्वेन अनादरज्ञापनाय 'वा'शब्दः. भगवदवताररूपोऽपि बादरायणः प्रासङ्गिकेऽपि भक्तिमार्गस्मरणे तदीयरसावेशपरवशः तद्भावस्वभावम् अनूक्तवान्॥21॥

अपिच, उपसंहारो हि तत्र अनुक्तानाम् अन्यत्र उक्तानां गुणानां तत्र सत्त्वेन ज्ञानमात्रम्. उक्तरूपभक्तायतु तद्भजनीये भक्तएव अलौकिकान् अनुभावान् भगवान् प्रत्यक्षं दर्शयतीति न तत्र उपसंहारापेक्षागन्धोऽपि इत्यत्र उत्तरं पठति.

दर्शयति च॥22॥

ननु भक्तभक्तः स्वसेव्ये अत्यलौकिकं वीर्यं दृष्ट्वा तदाविष्टे भगवति तत्सम्भारकत्वस्य इन्द्रादीनामपि तदाज्ञापेक्षित्वं दृष्ट्वा द्युलोकव्यापकत्वस्य उपसंहारं करिष्यति इति आशङ्क्य आह
सम्भृतिद्युव्याप्त्यपि चातः॥23॥

राणायनीयानां खिलेषु पठ्यते "ब्रह्मज्येष्ठा वीर्या सम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवम् आततान, ब्रह्म भूतानां प्रथमन्तु जज्ञे, तेन अर्हति ब्रह्मणा स्पर्धितुं कः" (तैत्ति.ब्राह्म.2।4।6) इति. अस्य अर्थस्तु. अन्यैः हि पुरुषैः सहायानपेक्ष्य विक्रमाः सम्भ्रियन्ते. तेन तत्पराक्रमाणां तएव नियतपूर्वभावित्वरूपकारणत्वेन ज्येष्ठाः. ब्रह्मधर्माणान्तु ब्रह्मैव ज्येष्ठम् अनन्यापेक्षं सृष्ट्यादि करोति इति अर्थः. एवं सति ब्रह्म ज्येष्ठं येषां तानि ब्रह्मज्येष्ठानि वीर्याणि. अत्र छन्दसि बहुवचनस्य डादेशः. किञ्च, अन्येषां वीर्याणां बलवद्भिः मध्ये भङ्गोऽपि भवति. तेन ते स्ववीर्याणि न सम्बिभ्रति. ब्रह्मवीर्याणितु ब्रह्मणा सम्भृतानि निष्प्रत्यूहं सम्भृतानि इति अर्थः. तच्च ज्येष्ठं ब्रह्माग्रे इन्द्रादिजन्मनः प्रागेव दिवं स्वर्गम् आततान व्याप्तवन्नित्यमेव विश्वव्यापकम् इति अर्थः. देशतो अपरिच्छेदम् उक्त्वा कालतोऽपि तम् आह 'ब्रह्म' इति. भूतानाम् आकाशादीनां पूर्वमेव जज्ञे. आविर्बभूव इति अर्थः. एतेन वीर्यसम्भृति-द्युव्याप्ति-प्रभृतिमाहात्म्यम् उक्तं भवति.

तथाच सम्भृतिश्च द्युव्याप्तिश्च तयोः समाहारः तथा. एतावपि स तत्र न उपसंहरति. तत्र हेतुः "न वाविशेषाद्" (ब्रह्मसू.3।3।21) इति सूत्रोक्तएव इति अतिदिशति अतएव इति. एतद् यथा-तथा तत्रैव उक्तम्

विषयवाक्योत्तरार्धोक्तधर्मान् उद्देशेन एवं ज्ञायते भक्तस्य ऐहिक-पारलौकिकोपयोगिधर्मोपलक्षणार्थं द्वयोरेव उद्देशः कृतः इति. 'च'कारेण दर्शनमपि उक्तं समुच्चीयते. अन्यच्च. स्पर्धाकृतिसम्भावनायां हि तद्योग्यता-निषेधः सम्भवति. साच आविर्भूतएव भगवति सम्भवतीति अखिलशक्त्यावि-र्भावपूर्वकम् आविर्भूतस्य तस्य एतया श्रुत्या माहात्म्यम् उच्यते इति गम्यते. एवं सति एतद्वाक्योक्तधर्मयोरेव अनुपसंहार्यत्वेन यत् कथनं तत्तु भक्तहृदि आविर्भूतं ब्रह्मापि एवम्भूतमेव इति ज्ञापनाय अतो युक्तएव अनुपसंहारः॥23॥3॥
इति तृतीयाध्याये तृतीयपादे तृतीयं कार्याख्यानाद् इति अधिकरणम्॥3॥

## पुरुषविद्यायामिव च इतरेषाम् अनाम्नानात्॥24॥ (3।3।4)

तैत्तिरीयके "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्, स भूमिं विश्वतो वृत्वा अत्यतिष्ठद् दशाङ्गुलं, पुरुषएव इदं सर्वं यद् भूतं यच्च भाव्यम्" (तैत्ति. संहि.3।12।1) इत्यादिना पुरुषविद्या निरूप्यते. तत्रैव, "ब्रह्मविदाप्नोति परम्" (तैत्ति.उप.3।1) इति प्रश्ने, "स वा एष पुरुषो अन्नरसमयः" (तैत्ति. उप.3। 2) इत्यारभ्य प्राणमय-मनोमय-

विज्ञानमयानन्दमयात्मकं ब्रह्मस्वरूपं निरूप्यते. तत्र सर्वत्र "स च पुरुषविध एव" (तत्रैव) इति च पठ्यते.

अत्र अन्नमयादिषु पुरुषसूक्ते च 'पुरुष'पदश्रवणाद् अन्नमयादिषु सहस्रशीर्षत्वाद्युपसंहारः कर्तव्यो न वा? इति भवति संशयः. किम् अत्र युक्तम्? उपसंहर्तव्यमेव इति. कुतः? सर्वत्र ब्रह्मणएव उपास्यत्वाद् अत्रापि उपासनोक्तेः ब्रह्मत्व-पुरुषत्वयोः अविशेषाद् विद्यैक्याद् इति प्राप्ते, उच्यते पुरुषविद्या-यामिव इति. अन्नमयादिषु सहस्रशीर्षवत्वादिकं न उपसंहर्तव्यम्. कुतः? पुरुषविद्यायां यथा पुरुषस्वरूपं निरूप्यते न तथा इतरेषाम् अन्नमयादीनां विज्ञानमयान्तानां स्वरूपं तत्प्रकरणे निरूप्यते. अत्र हि पुरुषत्वम् उच्यते. 'सहस्र'पदम् अनेकत्वोपलक्षकम्. अन्यथा अक्ष्णां शिरोभ्यो द्वैगुण्यं वदेत्. तेन साकार-व्यापकत्वम् उक्तं भवति. तत्र पुरुषविधत्वं, सच आध्यात्मिकरूपः, तच्छरीराभिमानी आत्मा च अन्यः आधिदैविकः उच्यते, न तथा अत्र. किञ्च, "पुरुष एवेदं सर्वम्" (तैत्ति.संहि.3।12।1) इत्यादिना प्रपञ्चात्मकत्वं मुक्ति-दातृत्वं च उक्त्वा, न एतावन्मात्रम् अस्य माहात्म्यम्, इतोऽपि महत् माहात्म्यम् अस्ति इति वक्तुं प्रपञ्चरूपं तद्विभूतिरूपम् इति "एतावान् अस्य महिमा" (तत्रैव 3।12।1) इत्यनेन उक्त्वा ततः आधिक्यम् आह "अतो ज्यायांश्च पूरुषः"(तत्रैव3।12।1) इति. एवम् अतिवैलक्षण्यात् 'पुरुष'पद-मात्रसाधर्म्येण न एकविद्यत्वं वक्तुं शक्यं, नच उपसंहारः इति. 'च'काराद् "अम्भस्य पारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्"(महाना.उप.1।1।1) इत्यादि-श्रुतयः, "सर्वतःपाणिपादान्तम्"(भग.गीता 13।13) इत्यादिस्मृतयश्च संगृह्यन्ते. एतेन यत्किञ्चिद्धर्मसाम्येऽपि न मूलभूतब्रह्मरूपत्वम्, अतएव न तत्र उपास्यता तथात्वेन इति ज्ञापितम्. अतएव भृगूपाख्याने अन्नमयादिब्रह्मज्ञानेऽपि जिज्ञासैव उक्ता. भृगोः आनन्दरूपपरब्रह्मज्ञानेतु न उक्ता. तेन अशेषगुणपूर्णं ब्रह्म इति उक्तं भवति. अतः उत्तमाधिकारिभिः तदेव उपासनीयं, न विभूतिरूपम् इति ज्ञापितम्॥24॥4॥
इति तृतीयाध्याये तृतीयपादे चतुर्थं पुरुषविद्यायाम् इति अधिकरणम्॥4॥

अथ निर्दोषत्वं ज्ञात्वा भजनीयम् इति ज्ञापयितुम् अधिकरणान्तरम् आरभते.

### वेधाद्यर्थभेदात्॥25॥ (3।3।5)

वाजसनेयिशाखायां "द्वया ह प्राजापत्याः"(बृहदा.उप.1।3।1) इति उपक्रम्य तेषां मिथःस्पर्धाम् उक्त्वा उच्यते
"ते ह देवा ऊचुः हन्तासुरान् यज्ञ उद्गीथेनात्ययामेति, ते ह वाचम् ऊचुः त्वं न उद्गायेति तथेति तेभ्यो वागुदगायत्, यो वाचि भोगः तं देवेभ्य आगायत्, यत् कल्याणं वदति तदात्मने, तेऽविदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्, स यः स पाप्मा यदेवेदम् अप्रतिरूपं वदति सएव, स पाप्मा" (तत्रैव 1।3।1) इति. एवमेव प्राण-चक्षुः-श्रोत्र-प्रभृतिषु पापवेधम् उक्त्वा उच्यते.

"अथैनम् आसन्यं प्राणमूचस्त्वं न उद्‌गायेति तथेति तेभ्य एष प्राण उदगायत्, ते विदुरनेन वै न उद्‌गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविव्यत्सन्, स यथाश्मानम् ऋत्वा लोष्ठो विध्वंसेतैवं ह वै विध्वंसमाना विष्वञ्चो विनेशुः" (तत्रैव 1।3।3) इति. छान्दोग्येऽपि प्राणादिषु एवमेव पाप्मवेधम् उक्त्वा आसन्येन तथा उच्यते. एतावान् परं विशेषः, वाजसनेयिनां गानकर्तृत्वं, सामगानाम् उद्‌गीथत्वेन उपास्यत्वम् उच्यते वाक्प्राणादीनाम् इति.

अत्र देहसम्बन्धित्व-गानकर्तृत्वयोः उपास्यत्वस्य च अविशेषेऽपि वागादिषु पाप्मवेधः आसन्यप्राणे कुतो न? इति भवति जिज्ञासा.

नच आसन्योपासनायाः विधेयत्वात् तत्स्तुत्यर्थम् अन्येषु पाप्मवेधः उच्यते अस्मिन् इति वाच्यम्. न हि प्रयोजनाय असन्तमपि अर्थं बोधयति श्रुतिः इति वक्तुं शक्यम्, प्रमाणत्वव्याहतिप्रसङ्गात्. एकत्र प्रतारकत्वे सर्वत्रापि तच्छङ्कया तदुक्ते कोऽपि न प्रवर्तेतापि. साक्षात्क्रियार्थत्वाभावेऽपि न असन्निरूपकत्वम् अर्थवादानाम्. वस्तुतस्तु "यदेव विद्यया करोति श्रद्धया उप-निषदा वा तदेव वीर्यवत्तरं भवति" (छान्दो.उप.1।1।10) इति श्रुतेः, "ज्ञात्वाज्ञात्वा च कर्माणि जनो अयम् अनुतिष्ठति, विदुषः कर्मसिद्धिः स्यात् तथा नाविदुषो भवेद्" (भाग.पुरा.10।21।6) इत्यादिवाक्यैः "य एवं वेद" (तैत्ति.उप.2।9) इतिवाक्यैश्च अर्थवादोक्तस्वरूपं ज्ञात्वा कर्मकरणे पूर्णं फलम्, अन्यथा नेति अर्थवादानां फलोपकार्यङ्गनिरूपकत्वाद् न आनर्थक्यम्. अतः उक्ते अर्थे हेतुं न पश्यामः इति प्राप्ते, तमेव आह वेधाद् इति. वाक्-प्राणादिषु यः पाप्मवेधः, 'आदि'पदाद् दुष्टविषयसम्बन्धश्च. तत्र हेतुः अर्थभेदः. अर्थो भगवान् तस्माद् भेदाद् इति अर्थः. आसन्यस्तु "य एव अयं मुख्यः प्राणः तम् उद्‌गीथम् उपासीत" (छान्दो.उप.1।2।7) इति छान्दोग्ये उपास्यत्वेन उक्तः. "सर्ववेदान्तप्रत्ययम्" (ब्रह्मसू.3।3।1) इतिन्यायाद् वेदान्तेषु उपास्यं ब्रह्मातिरिक्तं न उच्यतइति आसन्योऽपि ब्रह्माभिन्नः. अतएव "अपहतपाप्मा ह्येषः" (छान्दो.उप.8।4।1) इति सामगैः पठ्यते. अतः तत्र न पाप्मवेधः इति भावः. ब्रह्मणः स्वतन्त्र-पुरुषार्थत्वज्ञापनाय 'अर्थ'पदेन उक्तिः. एतेन विभूतिरूपेऽपि यत्र एवं तत्र मूलभूतब्रह्मणि निर्दोषत्वं किं वाच्यम् इति ज्ञापितम्. अथवा, अर्थः प्रयोजनं विषयः इति यावत्. तद्भेदाद् इति अर्थः. अत्र इदम् आकूतम् : देवा हि स्वस्य असुरजयाय गानार्थं वागादीन् ऊचुः "त्वं न उद्‌गाय" (बृहदा.उप.3।3।1) इति. गानानन्तरं "यो वाचि भोगस्तं देवेभ्य आगायद्" (तत्रैव 1।3।1) इति उच्यते. एवमेव प्राणादिष्वपि स्व-स्वभोगं "देवेभ्य आगायद्" इति. एवं सति देवार्थमेव एतद्‌गानं, नतु भगवदर्थम्. यद्यपि आसन्येऽपि एवम् उच्यते, "तेभ्य एष प्राण उदगायत्" (तत्रैव 3।3।3) इति, तथापि यथा वागादिषु स्वनिष्ठभोगं "देवेभ्य आगायत्" (तत्रैव 3।3।1) इति उक्तं, तथा न आसन्ये. तेन उक्तमानैः ब्रह्मात्मकत्वेन असुरजयहेतुः भगवत्सम्बन्धएव इति ज्ञात्वा तथैव आगायद् आसन्यः इति ज्ञायते. अतएव अन्यत्र वेधः उक्तो अत्र तत्करणेच्छायामपि आसुराणां नाशः उक्तः. अग्रे च, "भवत्यात्मना परास्य द्विषन् भ्रातृव्यो

भवति य एवं वेद" (बृहदा.उप. 1।3।7) इति पठ्यते. तेन परब्रह्म निर्दोषम् इति किमु वाच्यम्. यत्र तद्विभूतिरूपासन्यस्य उक्तरूपतां यो वेत्ति, सोऽपि गुणयुक्तो दोषरहितश्च भवति इति कैमुतिकन्यायः सूचितो भवति. एतेन लोके दोषत्वेन ये धर्माः प्रतीयन्ते, तएव धर्माः भगवति निरूप्यमाणा न दोषत्वेन ज्ञेयाः किन्तु गुणत्वेनैव, वस्तुनएव तथात्वाद् इति भावो ज्ञाप्यते॥25॥

एवं भगवत्सम्बन्धाभावे दोषसम्बन्धम् उक्त्वा तथा सति गुणहानिं च वदन् तत्र विशेषम् आह.

हानौ तूपायनशब्दशेषत्वात्
कुशाच्छन्दःस्तुत्युपगानवत् तदुक्तम्॥26॥

"तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यम् उपैति" (मुण्ड. उप.3।1।3) इति आथर्वणिकैः पठ्यते. 'परम'पदेन ब्रह्म उच्यते. तथाच सकार्याविद्यारहितः 'परमम् उपैति'. तदनन्तरं 'साम्यम् उपैति' इति योजना.

तत्र इदं विचार्यते : साम्यंहि समानजातीयधर्मवत्वम्. तच्च कतिपयधर्मैः अशेषतन्निष्ठधर्मैः वा भवति. तत्र अन्त्यः पक्षो ब्रह्मणा समं न सम्भवति. "न तत्समश्चाभ्यधिकश्च दृश्यते"(श्वेता.उप.6।8) इति श्रुति-विरोधात्. अतः आद्यएव पक्षो अनुसर्तव्यः. तत्र कैः धर्मैः साम्यम् इह उच्यते? इति आकांक्षायाम् आह हानौ इति. ब्रह्मणः सकाशाद् विभागो जीवस्य 'हानि'शब्देन उच्यते. तथाच तस्यां सत्यां ये धर्माः जीवनिष्ठाः आनन्दांशैश्वर्यादयो भगवदिच्छया तिरोहिताः, ते ब्रह्मसम्बन्धे सति पुनः आविर्भूताः इति तैरैव तथा इति अर्थः. भगवदानन्दादीनां पूर्णत्वाद् जीवानन्दादीनाम् अल्पत्वाद् नाम्नैव समैः धर्मैः कृत्वा ब्रह्मसाम्यं जीवे उपचर्यते. "साम्यम् उपैति" इति. वस्तुतस्तु न एतैरपि धर्मैः साम्यम् इति भावः. अतएव "न तत्समः" (श्वेता.उप.6।8) इति श्रुतिः अविरुद्धा. अतएव सूत्रकृता "साम्यमुपैति" इति साम्योपायनशब्दमात्रं, नतु साम्यपदार्थः स्वारसिको अत्र अस्ति इति भावप्रकटनाय 'शब्द'शब्दः उक्तः. ननु तैरेव धर्मैः साम्यं, न इतरैः इति अत्र को हेतुः? इति आकांक्षायाम् आह उपायनशब्दशेषत्वाद् इति. "परमम् उपैति" इति यः 'उपायन'शब्दः तच्छेषत्वात् साम्योपायनस्य इति अर्थः. ब्रह्मसम्बन्धहेतुकत्वाद् आनन्दांशाद्याविर्भावस्य, तदैव साम्योपायन-कथनात् तैरेव धर्मैः साम्यम् अभिप्रेतम् इति भावः. ननु आनन्दादीनां ब्रह्मधर्मत्वात् तैः तत्साम्यकथनं तदभेदमेव गमयति इति आशङ्क्य, तद्धर्मवत्व-मात्रस्य न तदभेदसाधकत्वम् इति अत्र दृष्टान्तम् आह कुशा...इत्यादि. कुशा औदुम्बर्यः समिधः ताः अग्निष्टोमादियागेषु प्रस्तोत्रा स्थाप्यन्ते. तदा तत्सम्बन्धि यत् छन्दःस्तुत्युपगानं तद्वद् इति अर्थः. तत्र "अभि त्वा शूर नोनुमो दुग्धा इव धेनवः" (ऋग्वेद 5। 3।21) इति ऋचि ये वर्णाः, तेषाम् अचएव उपसंहृत्य 'भ'कारेणैव गानं क्रियते. न हि तदार्चिकवर्णधर्माणाम् अचाम् उपसंहारो अस्ति इति तद् ऋगात्मकत्वं 'भ'कारस्य सम्भवति. एवं प्रकृतेऽपि ब्रह्मधर्मप्राकट्येन न तदात्मकत्वं जीवस्य सम्भवति.

ननु "तत्त्वमसि" (छान्दो.उप.6।8।7) आदिवाक्यैः अत्र अभेद-बोधनाद् अस्तु तथा इति चेत्, तत्र आह तदुक्तम् इति. जीवब्रह्माभेद-बोधनतात्पर्यम् उक्तम् इति अर्थः. "तद्‌गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवद्" (ब्रह्मसू.2।3।29) इति सूत्रेण इति शेषः.

अपिच, श्रुतौ ब्रह्मोपायनस्य साम्योपायनहेतुत्वोक्त्या तदनुपायनस्य साम्यानुपायने हेतुत्वम् इति ज्ञाप्यते. तथाच, "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ"(ब्रह्मसू.3।2।5) इति सूत्रे जीवस्य ब्रह्मांशत्वेन आनन्दैश्वर्यादि-ब्रह्मधर्मवत्त्वाद् ब्रह्मणः सकाशाद् विभागे सति तदिच्छया तद्धर्मतिरोधानस्य संसारित्वे हेतुत्वम् उक्तं यत्, तदपि तदुक्तम् इत्यनेन स्मार्यते इति न विस्मर्तव्यम्. यथा अन्यशाखोक्तधर्मापि एकस्यां विद्यायाम् उपसंह्रियन्ते, एवं ब्रह्मनिष्ठाः धर्माः जीवेऽपि एतया श्रुत्या बोध्यन्ते इति एतावत् साम्यम् अस्ति इति उपसंहारप्रकरणे एतस्य निरूपणं कृतम्॥26॥5॥
इति तृतीयाध्याये तृतीयपादे पञ्चमं वेधाद्यधिकरणम्॥5॥

## सम्पराये तर्तव्याभावात् तथा ह्यन्ये॥27॥ (3।3।6)

वाजसनेयिशाखायां "स एष नेति नेति इति आत्मा" (बृहदा.उप.3। 9।26) इत्युपक्रम्य, "न व्यथते" (तत्रैव) इत्यन्तेन ब्रह्मस्वरूपम् उक्त्वा, यतः एतादृग्ब्रह्म अतः तद्विदपि विवक्षितरूपः इति अभिप्रायेण अग्रे पठ्यते "अतः पापमकरवम् अतः कल्याणम् अकरवम् इत्युभे ह्येष एते तरति अमृतः" (तत्रैव 4।4।22) इत्यादिना. अग्रिमया "एष नित्यो महिमा ब्राह्मणस्य" (तैत्ति.ब्राह्म. 3।12।9।7) इति ऋचा च ब्रह्मविदो माहात्म्यम् उक्त्वा पठ्यते.
"तस्माद् एवंवित् शान्तो दान्त उपरतः तितिक्षुः श्रद्धावित्तो भूत्वा आत्मन्येव आत्मानं पश्येत्. सर्वम् एनं पश्यति, सर्वो अस्य आत्मा भवति, सर्वस्य आत्मा भवति, सर्वं पाप्मानं तरति, नैनं पाप्मा तरति"(बृहदा.उप.4।4।23)

इत्याद्युक्त्वा अन्ते पठ्यते "य एवं वेद" (तत्रैव 4।4।25) इति. अत्र हि पाप्मतरणादिरूपं ब्रह्मज्ञानमाहात्म्यम् उच्यते, ज्ञानस्य संसारमुक्तिहेतुत्वात्. अथर्वणोपनिषदादिषु तु भगवद्भक्तेः मुक्तिहेतुत्वम् उच्यते. "परं ब्रह्म एतद् यो धारयति"(गोपा.पू.उप.1) इत्युपक्रम्य "भजति सो अमृतो भवति सो अमृतो भवति"(तत्रैव) इति. अग्रेऽपि "मुक्तो भवति संसृतेः"(तत्रैव) इति. एत-द्विषयव्यवस्थातु पुरैव उक्तेति न अत्र उच्यते.

एतावान् परं सन्देहः. "य एवं वेद स पाप्मानं तरति"(नृसिं.पू.ता. उप.2।1) इति वचनाद् ज्ञानदशायामपि पापसत्त्वं वाच्यम्, अन्यथा तरणासम्भ-वापत्तेः. एवं सति भक्तिदशायामपि एवमेव न वा? इति भवति संशयः.

तत्र श्रुतौ अविशेषेण पापनाशश्रवणात् मुक्तिपूर्वकाले पापनाशाव-श्यम्भावाद् "एकत्र निर्णीतः शास्त्रार्थो अपरत्रापि तथा" इति न्यायेन भक्त्या पापानाशाद् अत्रापि तथैव

इति प्राप्ते, आह सम्पराये... इत्यादि. सम्परायः परलोकः, तस्मिन् प्राप्तव्ये सति इति अर्थः. अथवा. परः पुरुषोत्तमः तस्य अयो ज्ञानम्. तथाच सम्यग्भूतं पुरुषोत्तमज्ञानं येन सः सम्परायो भक्तिमार्गः इति यावत्. अथवा. परे पुरुषोत्तमे अयनम् अयो गमनं प्रवेशः इति यावत्. तथाच सम्यक् परायो येन सः तथा भक्तिमार्ग इति अर्थः. ज्ञानमार्गे अक्षरप्राप्त्या भक्तिमार्गे पुरुषोत्तमप्राप्त्या तस्माद् विशेषम् अत्र ज्ञापयितुम् एवं कथनम्. अतो भक्तेः पूर्वमेव पापनाशो युक्तः इति भावः. ब्रह्मभूतस्य भक्तिलाभानन्तरं "भक्त्या माम् अभिजानाति" (भग.गीता 18।55) इति भगवद्वाक्यात् पुरुषोत्तमस्वरूपज्ञानस्य भक्त्यैकसाध्यत्वात् तथा. एवं सति

"मुक्तानामपि सिद्धानां नारायणपरायणः,
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने" (भाग.पुरा.6।14।5)
"मुक्तोपसृप्यव्यपदेशात्" (ब्रह्मसू.1।3।2)
"जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः,
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते" (पाण्ड.गीता 40)
"जन्मान्तरसहस्रेषु समाराध्य वृषध्वजं,
वैष्णवत्वं लभेत् कश्चित् सर्वपापक्षयादिह"(वारा.पुरा.209।86)

इत्यादिवाक्यैः पापनाशानन्तरमेव भक्तिसम्भवात् भक्तस्य तर्तव्य-पापादेः *अभावाद् न ज्ञानमार्गीयतुल्यता इति अर्थः.

ननु "य एवं वेद"(नृसिं.पू.उप.2।1) इतिसामान्यवचनात् पुरुषोत्तम-विदोऽपि एवमेव इति चेत्, तत्र आह तथाहि अन्ये. तथा ज्ञानानन्तरमपि पापवन्तो अन्ये भक्तिमार्गीयेभ्यो अन्य इति अर्थः. उक्तवचनरूपोपपत्तिः 'हि'-शब्देन ज्ञाप्यते॥27॥

ननु भक्तिमार्गीयाणामपि गोपस्त्रीणां "दुःसहप्रेष्ठविरहतीव्रतापधुता-शुभाः ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गलाः" (भाग.पुरा.10।29।10) इतिवचनेन दुष्कृतसुकृतयोरपि हानिश्रवणात् पूर्वोक्तवचनैः विरोधः इति आशङ्कायाम् उत्तरं पठति.
छन्दत उभयाविरोधात्॥28॥

छन्द इच्छा. तथाच भक्तिमार्गीयाणामपि पूर्वं पापनाशो यः, सः भगवदिच्छाविशेषतः. अतो भक्तेः पूर्वमेव पापनाशनिरूपकातन्नाशनिरूपक-वचनयोः अविरोधाद् हेतोः भक्तेः पूर्वमेव पापनाशः आवश्यकः इति अर्थः. एवं सति भक्तेः पूर्वमेव तन्नाशः औत्सर्गिकः. सः क्वचिद् विशेषेच्छया अपनोद्यते इति भावो ज्ञापितो भवति. अत्र इच्छाविशेषे वक्तव्यबहुत्वेऽपि किञ्चिद् उच्यते. चिकीर्षितलीलामध्यपातिभक्ता न सोपधिस्नेहवत्यः, न सगुणविग्रहाः, न वा सुकृतादियुक्ताः इति ज्ञापयितुं कतिपयगोपीः तद्विपरीतधर्मयुक्ताः कृत्वा, तस्यां दशायां स्वप्राप्तौ प्रतिबन्धं कारयित्वा, स्वयमेव तां दशां नाशयित्वा, स्वलीलामध्यपातिनीः कृतवान् इति. न हि एतावता सार्वदिकएव अयं भावो

भवति. न हि मन्त्रप्रतिबद्धशक्तिः अग्निदाहकइति तत्स्वभावत्वमेव तस्य सार्वदिकम् इति वक्तुं शक्यम्. एतच्च श्रीभागवतदशमस्कन्धविवृतौ प्रपञ्चितम् अस्माभिः॥28॥
इति तृतीयाध्याये तृतीयपादे षष्ठं सम्परायाधिकरणम्॥6॥

## गतेरर्थवत्त्वम् उभयथा अन्यथा हि विरोधः॥29॥ (3।3।7)

ननु "सत्यं ज्ञानम् अनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन्" (तैत्ति.उप.2।1) इति "तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यते अयनाय"(तैत्ति.आर.3।12।7) इत्यादिश्रुतिभिः उक्तरूपब्रह्मज्ञाने सत्येव मोक्षः इति उच्यते. "यमेव एष वृणुते तेन लभ्यः"(कठोप.2।22) इतिश्रुत्या आत्मीयत्वेन अङ्गीकारात्मकवरणस्य भक्तिमार्गीयत्वात् तस्मिन् सति भक्तिमार्गे प्रवेशात् भक्त्यैव सः इति उच्यते. किञ्च. "भक्त्या माम् अभिजानाति" (भग.गीता18।55)इति उक्त्वा, "ततो मां तत्वतो ज्ञात्वा विशते तदनन्तरम्" (तत्रैव) इति भगवता उक्तमिति भक्तिमार्गेऽपि पुरुषोत्तमज्ञानेनैव मोक्षः उच्यते, ज्ञानमार्गेतु अक्षरज्ञानेन इति विशेषः. "तस्मान् मद्भक्तियुक्तस्य योगिनो वै मदात्मनः, न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेद् इह" (भाग. पुरा.11।20।31) इतिवचनेन भक्तिमार्गीयस्य ज्ञाननैरपेक्ष्यमपि उच्यते. तथाच एवं मिथः श्रुत्योः स्मृत्योश्च विरोधाद् न एकतरनिर्धारः सम्भवति. नच ज्ञानेनैव मोक्षः, उभयत्रापि तथोक्तेः, ज्ञाननैरपेक्ष्योक्तिस्तु भक्तिस्तुत्यभिप्राय इति वाच्यम्. विषयभेदेन ज्ञानभेदात् मुक्तिसाधनं कतमज्ज्ञानम् इति अनिश्चयात्. नच श्रौतत्वाविशेषात् समुच्चयः इति वाच्यम्. ज्ञानिनो अक्षरे भक्तस्य पुरुषोत्तमे लयात् समुच्चयासम्भवात्. तर्हि एवं विरोधाभावाद् उपपन्नं सर्वम् इति चेद्, न, पूर्वं ज्ञानमार्गीयज्ञानवतः पश्चाद् भक्तिमार्गीयज्ञानवतो लयस्थाननिर्धारास-म्भवात्. अपरञ्च, "ततो मां तत्त्वतो ज्ञात्वा"(भग.गीता18।55) इति वचनाद् भक्तिमार्गे तत्त्वतो भगवज्ज्ञानमेव प्रवेशसाधनम् इति मन्तव्यम्.

तथाच "मत्कामा रमणं जारं मत्स्वरूपाविदोबलाः, ब्रह्म मां परमं प्रापुः सङ्गाच्छतसहस्रशः"(भाग.पुरा.11।12।13) इति वाक्याद् ज्ञानमार्गीय-भक्तिमार्गीय-ज्ञानरहितानामपि भगवत्प्राप्तेः तत्साधनत्वनिरूपकश्रुतिविरोधः.

तथाच क्वचिद् ज्ञानं मुक्तिसाधनत्वेन उच्यते, क्वचिद् भक्तिः, क्वचिद् न उभयमपि इति एकतरसाधनानिश्चयात् मुक्तिसाधने मुमुक्षोः प्रवृत्यसम्भवः इति प्राप्ते, आह गतेः अर्थवत्त्वम् इत्यादि. गतेः ज्ञानस्य अर्थवत्त्वं फलजनकत्वम्, उभयथा मर्यादा-पुष्टिभेदेन इति अर्थः.

अत्र अयम् आशयः : "एष उ एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति"(कौषी.उप.3।9) इत्यादिश्रुतिभ्यो भगवान् सृष्टिपूर्व-कालएव एतस्मै जीवाय एतत् कर्म कारयित्वा एतत् फलं दास्ये इति विचारित-वानिति तथैव भवति. तत्र उक्तरीत्या मुक्तिसाधनाननुगमे हेतुः अवश्यं वाच्यः. एवं सति कृतिसाध्यं साधनं ज्ञानभक्तिरूपं

शास्त्रेण बोध्यते. ताभ्यां विहिताभ्यां मुक्तिः 'मर्यादा', तद्रहितानामपि स्वस्वरूपबलेन स्वप्रापणं 'पुष्टिः' इति उच्यते. तथाच यं जीवं यस्मिन् मार्गे अङ्गीकृतवान्, तं जीवं तत्र प्रवर्तयित्वा तत् फलं ददाति इति सर्वं सुस्थम्. अतएव पुष्टिमार्गे अङ्गीकृतस्य ज्ञानादिनैरपेक्ष्यं, मर्यादायाम् अङ्गीकृतस्य तदपेक्षित्वं च युक्तमेव इति भावः.

अत्र साधकत्वेन विपक्षे बाधकम् आह अन्यथा हि विरोधः इति. अन्यथा मर्यादापुष्टिभेदेन व्यवस्थायाः अकथने विरोधाद् हेतोः तथा इति अर्थः. विरोधस्तु पूर्वपक्षग्रन्थे उपपादितः. एतेनैव ननु श्रवणादिरूपा प्रेमरूपा च भक्तिः अविशेषेण पापक्षयएव उदेति उत कश्चिद् विशेषो अस्ति तत्र आधुनिकानामपि भक्तानां दुःखदर्शनात् श्रवणादेः पापनाशकत्वश्रवणाच्च अविशेषपक्षस्तु असङ्गतः. अथ श्रवणादिरूपा पापे सत्यपि भवति, प्रेमरूपातु तन्नाशएव इति विशेषो वाच्यः. सोऽपि प्रेमवतामपि अक्रूरादीनां मणिप्रसङ्गे भगवता समं कापट्यकृतिश्रवणाद् न साधीयान् इत्यपि शङ्का निरस्ता वेदितव्या.

तथाहि. मर्यादापुष्टिभेदेन अङ्गीकारे वैलक्षण्याद् आद्यायाम् अङ्गीकृतानां मुमुक्षयैव श्रवणादौ प्रवृत्तिः, तद्दातृत्वेनैव भगवति प्रेमापि, नतु निरुपधिः. कदाचिद् वस्तुस्वभावेन मुक्तीच्छानिवृत्तावपि तद्भक्तेः साधन-मार्गीयत्वाद् "अनिच्छतो मे गतिम् अण्वीं प्रयुङ्क्ते" (भाग.पुरा. 3।25। 36) इतिवाक्याद् अन्ते मुक्तिरेव भवित्री. अस्मिन् मार्गे श्रवणादिभिः पापक्षये प्रेमोत्पत्तिः, ततो मुक्तिः. पुष्टिमार्गे अङ्गीकृतेस्तु अत्यनुग्रहसाध्यत्वात्, तत्रच पापादेः अप्रतिबन्धकत्वात्, श्रवणादिरूपा प्रेमरूपा च युगपत् पौर्वापर्येण वा, वैपरीत्येन वा भवत्येव. अत्र श्रवणादिकमपि फलरूपमेव. स्नेहेनैव क्रियमाणत्वाद् न विधिविषयः. न हि अविद्यादिमुक्त्यन्तरूपभजनानन्दात्यन्तरायरूपाभ्रङ्कषा-विरलविविध-महातरुगहनानां दहने लोलुपस्य अनुग्रहानलस्य तदान्तरालिक-पापतूलं प्रतिबन्धकम् इति वक्तुं शक्यम्. तदुक्तं श्रीभागवते "स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः, विकर्म यच्च उत्पतितं कथञ्चिद् धुनोति सर्वं हृदि सन्निविष्टः"(भाग.पुरा.11।5।42) इति. 'विकर्म' प्राक्तनं,
तद्दुःखदम् इति, स्वयं च हरित्वेन दुःखहर्ता इति 'धुनोति'. उक्तविशेषण-विशिष्टस्य स्वतो विकर्मकृत्यसम्भवात् "सांसर्गिकं मत्तो भूतं नतु मया *कृतम्" इतिवद् वा यत् कृतं 'विकर्म' तत् 'कथञ्चिद् उत्पतितम्' इति उच्यते. 'त्यक्तान्य-भाव'त्वेन भगवत्सेवाव्यासङ्गेन 'इन्द्रद्युम्ना'ख्यपाण्ड्यराजवत् (भाग.पुरा.8।4। 7-9) महदागमनाद्यज्ञानं वा. वक्ता उक्तरूपे भक्ते विकर्मोक्तौ 1अनुचितत्व-ज्ञापनाय वा 'कथञ्चिद्' इति उक्तवान्. तेन तर्कितं विकर्मा अत्र 2अभिप्रेतम् इति ज्ञायते. एतादृशस्यापि यदि 'विकर्म' भवेत् तदा तन्निवृत्यर्थं न तेन अन्यत् कर्तव्यम्. भगवानेव हृदि निविष्टः तद् धुनोति यतः इति. कदाचित् स्वभक्ति-बलस्फूर्त्या सदोषमपि जनं कृतार्थीकरिष्यामि इति अङ्गीकुर्यात् चेत् भक्तः, तदैव तद्धृदिस्थएव तत्संसर्गजं दोषम् अस्य एतद् अङ्गीकारेण तद्दोषमपि धुनोति इति 'सर्व'पदेन उच्यते. चिरकालभोग्यमपि तत्क्षणेनैव नाशयति. तन्नाशने कालादेः

अप्रतिबन्धकत्वम् इत्यपि ज्ञापयितुं ‘पर’स्य कालादेः ईशत्वम् उक्तम्. अत्र भजनादि-हृन्निवेशान्तानां स्पष्टएव विकर्मणि सत्यपि सम्भवः इति॥29॥7॥
इति तृतीयाध्याये तृतीयपादे सप्तमं गतेरर्थवत्वम् इति अधिकरणम्॥7॥

## उपपन्नस् तल्लक्षणार्थोपलब्धेः लोकवत्॥30॥ (3।3।8)

ननु मुक्तेरेव सर्वत्र फलत्वम् उच्यते, युक्तञ्च एतत्, संसृतेः दुःखात्म-कत्वात् तन्निवृत्तेः सर्वेषाम् इष्टत्वात्, पुष्टिमार्गीयभक्तानान्तु तदनपेक्षित्वम् उच्यते. तदुक्तम् अथर्वणोपनिषत्सु. अष्टादशार्णमन्त्रस्वरूपम् उक्त्वा पठ्यते “परब्रह्म एतद् यो धारयति” (गोपा.पू.उप.1) इत्यादेः अन्ते “सो अमृतो भवति” (तत्रैव) इत्यादि. एतद् अग्रे “किं तद्रूपम्? किं रसनम्? कथं हैतद्भजनम्?” (तत्रैव) इत्यादि प्रश्नोत्तरं पठ्यते. “भक्तिरहस्यभजनं तद् इहामुत्रोपाधिनैराश्येनैव अमुष्यात्मनः कल्पनम् एतदेव नैष्कर्म्यम्” (तत्रैव) इति. एतद् अत्र विचार्यते : मन्त्रावृत्तितदधिष्ठातृरूपध्यानादेः अमृतत्वं फलम् उच्यते. भजनस्वरूपं च यावत्फलनैराश्येन भगवति आत्मनः कल्पनम् इति उच्यते. नच फलनैराश्येन भजनेऽपि अन्ते मुक्तिरेव भवित्री इति वाच्यम्. “तं यथा-यथा उपासते तथैव भवति तद्धैतान् भूत्वा अवति”(मुद्ग.उप.3।9) इति श्रुतेः मुक्तिसाधनत्वेन ज्ञात्वा भजतः सैव फलम्. स्वरूपस्यैव स्वतन्त्रपुरुषार्थ-त्वम् अनुभवन् यो भजते तस्य तदेव फलम् इति यतो निर्णयः सम्पद्यते. “ये यथा मां प्रपद्यन्ते तान् तथैव भजामि अहम्”(भग.गीता4।11)इति भगवद्वाक्याच्च. अतएव रहस्यभजनं लक्ष्यम् उक्तम्. तथाच श्रौतत्व-भगवत्सम्बन्धित्वयोः अविशेषात् कतमो गरीयान्? इति संशये गूढाभिसन्धिः पठति.

मुमुक्षोः सकाशाद् रहस्यभजनकर्तैव उपपन्नः उपपत्तियुक्तः. तमेव उद्घाटयति तल्लक्षणार्थोपलब्धेः इति. तल्लक्षणो भगवत्स्वरूपात्मको यो अर्थः स्वतन्त्रपुरुषार्थरूपः तदुपलब्धेः स्वाधीनत्वेन तत्प्राप्तेः इति अर्थः. यद्यपि पुरुषोत्तमे प्रवेशे तदानन्दानुभवो भवति, तथापि न प्रभोः तदधीनत्वम्, भक्तितिरोभावात्, प्रत्युत वैपरीत्यम्. भजनानन्दस्य ततो आधिक्यन्तु
“मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम्” (भाग.पुरा.5।6।18)
“दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः” (भाग.पुरा.3।29।13)
“नारायणपराः लोके” (भाग.पुरा.6।17।28) इति उपक्रम्य
“स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः” (भाग.पुरा.6।17।28)

इत्यादिवाक्यैः अध्यवसीयते. अतएव सामीप्यवाची उपसर्गः उक्तः. तेन दासीत्वेन दासत्वेन लीलायां सुहृत्त्वेन प्रभुनिकटे स्थितिः उक्ता भवति. नच महत्पदार्थस्वरूपाज्ञानाद् अल्पएव आनन्दे यथा सर्वाधिक्यं मन्वानः पूर्वोक्तं न वाञ्छति, तथा अत्रापि इति वाच्यं, दीयमानानाम् अर्थानां स्वरूपाज्ञाना-सम्भवात्. अनुभवविषयीक्रियमाणत्वस्यैव अत्र दीयमानपदार्थत्वात्. तदज्ञाने स्वर्गादित्रये

तुल्यदर्शित्वासम्भवश्च. "मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम्" (भाग.पुरा.3।29।13) इतिवाक्ये भक्तेः आधिक्यं स्पष्टमेव उच्यते. तस्माद् न्यूनार्थजिघृक्षोः सकाशात् पूर्णार्थवान् महानिति युक्तमेव अस्य उपप-न्नत्वम्. इममेव अर्थं दृष्टान्तेन आह लोकवद् इति. यथा स्वाधीनभर्तृका नायिका तदवस्थाननुगुणगृहवित्तादिकं दीयमानमपि न उररीकरोति, तथा इति अर्थः.

अथवा. स भगवानेव लक्षणम् असाधारणो धर्मो यस्य स तल्लक्षण उद्भटभक्तिभावः सएव अर्थः स्वतन्त्रपुरुषार्थरूपः इति. अग्रे पूर्ववत्. भगवत्प्रा-कट्यवानेव हि भक्तो भक्तत्वेन ज्ञायते इति तथा. एतेन ज्ञाप्यं हि ज्ञापकाद् अधिकं भवति. एवं सति यज्ज्ञापकं परमकाष्ठापन्नं वस्तु पुरुषोत्तमस्वरूपं सर्वफलरूपं *तन्महित्वं कथं वक्तुं शक्यम् इति सूच्यते॥30॥

इति तृतीयाध्याये तृतीयपादे अष्टमम् उपपन्नाधिकरणम्॥8॥

## अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम्॥31॥ (3।3।9)

अथर्वणोपनिषत्सु पठ्यते "परब्रह्म एतद् यो धारयति रसति भजति ध्यायति प्रेमति शृणोति श्रावयति उपदिशति आचरति सो अमृतो भवति सो अमृतो भवति" (गोपा.पू.उप.1) इति. तत्र धारणादीनां समुदितानामेव अमृत-साधकत्वम्, उत प्रत्येकमपि? इति भवति संशयः. अत्र धारणादिसाधन-कलापम् उक्त्वा फलम् उच्यते इति समुदितानामेव 1मुक्तिसाधकत्वम्. उपलक्षणं च एतत्. श्रवणादिनवविधभक्तीनामपि एवमेव तथात्वम् इति पूर्वपक्षे सिद्धान्तम् आह अनियमः इति.

समुदितानामेव तेषां फलसाधकत्वम् इति नियमो नास्ति इति अर्थः. अत्र उपपत्तिम् आह सर्वासाम् अविरोधः इति. "चिन्तयंश्चेतसा कृष्णं मुक्तो भवति संसृतेः" (गोपा.पू.उप.2) इति श्रुत्या चिन्तनमात्रस्य तथात्वम् उच्यते. "पञ्चपदीं जपन्" इत्यादि उक्त्वा "ब्रह्म सम्पद्यते ब्रह्म सम्पद्यते" (गोपा. पू.उप.1) इति श्रुत्या कीर्तनमात्रस्य तथात्वम् उच्यते. तथाच प्रत्येकपक्षएव सर्वासां श्रुतीनाम् अविरोधः स्यात्. एवं सति "परब्रह्म एतद् यो धारयति" (तत्रैव 1) इत्यादिषु "सो अमृतो भवति" इतिपदं प्रत्येकं सम्बध्यते इति ज्ञेयम्. ननु यथा दण्डादीनां प्रत्येकं घटहेतुत्वोक्तावपि न एकस्यैव तज्जनकत्वम्, एवम् अत्रापि एकैकस्य चिन्तनादेः तथात्वोक्तावपि फलसाधकत्वं समुदितानामेव तेषाम् इति चेद्, मा एवं. यो अर्थो यत्प्रमाणैकसमधिगम्यः सः तेन प्रमाणेन यथा सिध्यति तथा मन्तव्यः. दण्डादेः तथात्वं प्रत्यक्षेण गृह्यतइति तत्र तथा अस्तु, प्रकृतेतु तेषां तथात्वम् अलौकिकशब्दैकसमधिगम्यम्. श्रुतिस्तु उक्तैव. नच उक्तन्यायः श्रुतिष्वपि तात्पर्यनिर्णायको भवति इति वाच्यम्, अलौकिके अर्थे लौकिकस्य असामर्थ्यात्. अन्यथा ब्रह्मणा मनसैव प्रजाजनने निषेकादिकमपि कल्प्येत. स्मृतिरपि "केवलेन हि भावेन गोप्यो गावः खगा मृगाः, ये अन्ये मूढधियो नागाः सिद्धा माम् ईयुः अञ्जसा" (भाग.पुरा.11।12।

8). “एतावान् साङ्ख्य-योगाभ्याम्” (भाग.पुरा.2।1।6) इति उपक्रम्य, “अन्ते नारायण-स्मृतिः”(तत्रैव 2।1।6) इत्यादिरूपा एवमेव आह. इममेव अर्थं हृदि कृत्वा आह सूत्रकारः शब्दानुमानाभ्याम् इति. श्रुतिस्मृतिभ्याम् इति अर्थः. ते च उक्ते.

एतेन सूत्रकारस्य अन्योऽपि अनुशयो अस्ति इति भाति. यत्र उक्त-साधनस्तोमसम्पत्तिः एकस्मिन् भक्ते अस्ति, तत्र एकेनैव मुक्तौ इतरसाधनत्व-बोधकश्रुतिविरोधात् श्रवण-कीर्तन-स्मरणानां मुक्त्यव्यवहितपूर्वक्षणे युगपदपि सम्भवाद् अन्यथासिद्धिसम्भवे विनिगमकाभावाद् एकेनैव मुक्तिः इति न नियमः. अतः प्रत्येकसाधकत्वबोधिकानां सर्वासां श्रुतीनां मिथो अविरोधः. तर्हि एकत्र तथात्वे सर्वत्रैव तथा अस्तु इति आशङ्क्य तत्र बाधकम् आह शब्दानुमाना-भ्याम् इति. पूर्ववत्. तत्र प्रत्येकमपि मुक्तिहेतुत्वम् उच्यते इति न तथा इति अर्थः. यत्र प्रत्येकमपि तथात्वं तत्र किमु वक्तव्यं समुदितानां तथात्वे इति भावः. तेन श्लिष्टः प्रयोगो अयम् इति ज्ञेयम्॥31॥
इति तृतीयाध्याये तृतीयपादे नवमम् अनियमाधिकरणम्॥9॥

## यावदधिकारम् अवस्थितिराधिकारिकाणाम्॥32॥ (3।3।10)

पूर्वं मुमुक्षुभिः मुक्तिसाधनत्वेन क्रियमाणानां भगवद्धर्माणां मुक्तिसाधनप्रकारो विचारितः, अधुनातु भगवान् स्वविचारितकार्यं लौकिकैश्व-र्याद्यशक्यं ज्ञात्वा, स्वैश्वर्यादिकं दत्वा, येन जीवेन तत् कारयति, स जीवः तैः धर्मैः मुक्तो भवति न वा इति विचार्यते.

तत्र जीवकृतभगवद्विषयकधर्माणां यत्र तत्साधकत्वं, तत्र भगवदीयानां धर्माणां तत्साधकत्वं सुतरामेव. तेषां स्वकृत्यसाध्यत्वेन अविधेयत्वात् तत्साधनेषु अप्रवेशोऽपि इति सन्देहे निर्णयम् आह यावद् इत्यादि.

यस्मिन् जीवे यत्कार्यसाधनार्थम् अधिकारो भगवता दत्तः, तत्कार्य-साधनक्षमाः तस्मिन् ये स्वधर्माः भगवता स्थापिताः, ते आधिकारिका इति उच्यन्ते. तत्कार्यसम्पत्तिरेव तदधिकारप्रयोजनमिति तावदेव तेषां तस्मिन् स्थितिः इति अर्थः. एवं सति तत्सम्पत्तौ सोऽपि निवर्ततइति तत्सम्बन्धिनो धर्मापि निवर्तन्तइति मुक्तिपर्यन्तं न तेषां व्यापारसम्भवः, भगवता तथैव विचारितत्वात्. मुक्तिस्तु भक्त्यैव इति भावः. यच्च “ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे, परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्” (कूर्म.पूरा. 12।269।) इति वाक्यं, तत्तु आकल्पान्तं येषाम् अधिकारः सप्तर्षिप्रभृतीनां तद्विषयकम् इति ज्ञेयम्. अन्यथा भगवद्दत्ताधिकारसामर्थ्यस्य भरतस्य स्वाधिकारसमाप्तौ मुक्तिं न वदेत्. ‘कृतात्मानः’ इति पदात् तेषामपि भगवति कृतान्तःकरणानामेव ‘परस्य’ भगवतः परपदे व्यापिवैकुण्ठे प्रवेशः उच्यते, नतु आधिकारिकगुणैः॥32॥
इति तृतीयाध्याये तृतीयपादे दशमम् आधिकारिकाधिकरणम्॥10॥
अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्याम्

## औपसदवत् तदुक्तम्॥33॥ (3।3।11)

नन्‌ उक्त अथर्वणोपनिषद्वाक्यैः भगवद्धर्माणां मुक्तिसाधनत्वम् उच्यते, श्रुत्यन्तरेषु
"तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यते अयनाय"
(श्वेता.उप.3।8)
"ज्ञानादेव तु कैवल्यम्" (ग.पु.सा.16।87)
"तरति शोकम् आत्मवित्" (छान्दो.उप. 7।1।3)
"ब्रह्म वेद ब्रह्मैव भवति" (मुण्ड.उप.3।2।9)

इत्यादिषु ज्ञानस्यैव मुक्तिसाधनत्वम् उच्यते, श्रुतित्वाविशेषाद् उभयोः तथात्वे कारणवैजात्ये कार्यवैजात्यस्य आवश्यकत्वाद् मुक्तौ च तदसम्भवाद् "भक्त्या मामभिजानाति"(भग.गीता18।15) इतिवाक्याद् भक्तौ ज्ञानस्यापि सम्भवाद् ज्ञानेनैव मुक्तिः इति पूर्वपक्षे, ज्ञानसाधनत्वनिरूपकश्रुतितात्पर्यं निरूपयन् पुरुषोत्तमप्राप्तेरेव मुक्तिपदवाच्यत्वात् तद्भजनस्यैव तत्प्रापकत्वम् इति हृदि कृत्वा आह अक्षरधियाम् इत्यादि. 'तु'शब्दः पूर्वपक्षनिरासे. वाजसनेयके श्रूयते "एतद् वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलम् अनणु"(बृहदा.उप.3।8।8) इत्यादि. तथा अथर्वणे च "अथ परा यया तदक्षरम् अधिगम्यते"(मुण्ड.उप.1।1।5) इति. तेन ज्ञानमार्गे अक्षरविषयकाण्येव ज्ञानानि निरूप्यन्ते, पुरुषोत्तमविषयकाणि न इति निश्चीयते. "ब्रह्मविद् आप्नोति परम्"(तैत्ति.उप.2।1) इति श्रुतौ अक्षरब्रह्मविदो अक्षरात् परस्य प्राप्तिः उच्यते. "अक्षरादपि चोत्तमः"(भग.गीता18। 55) इति भगवद्-वाक्याच्च अक्षरातीतः पुरुषोत्तमः. "भक्त्या माम् अभिजानाति"(तत्रैव 18। 15) इतिवाक्ये 'माम्' इतिपदात् पुरुषोत्तमविषयकं ज्ञानम् उच्यते, नतु अक्षरविषयकम्. किञ्च, 'ब्रह्मभूत'स्य भक्तिलाभोक्तेः तस्य च आनन्दांशा-विर्भावात्मकत्वात् तस्य च अविद्यानाशजन्यत्वात् तस्य च अक्षरज्ञानजन्यत्वात् पूर्वकक्षाविश्रान्तमेव अक्षरज्ञानम्. एवं सति अक्षरविषयिणीनां धियां श्रुतौ मुक्तिसाधनेषु यः अवरोधः प्रवेशनं गणना इति यावत्, सः सामान्य-तद्भावाभ्यां हेतुभ्याम्. पुरुषोत्तमसम्बन्धिसम्बन्धे मुक्तिः इति सामान्यम्. मर्यादामार्गे अङ्गीकृतानां "ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति, समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्"(भग.गीता 18।54) इति वाक्याद् ब्रह्मभावानन्तरमेव भगवद्भावसम्भवात् तेन पुरुषोत्तमे प्रवेशात् तत्र परम्परोपयोगो ब्रह्मभावस्य इति उभाभ्यां हेतुभ्यां तथा इति अर्थः. वस्तुतस्तु पुरुषोत्तमप्राप्तिरेव मुक्तिः इति भावः.

नन्‌ अक्षरस्य अविशिष्टत्वेन तदुपासकानामपि तथात्वात् केषाञ्चित् तत्रैव लयः, केषाञ्चिद् भक्तिलाभः इति कथम् उपपद्यते? इति आशङ्क्य, तत्र हेतुं दृष्टान्तेन आह औपसदवद् इति. 'उपसदा'ख्ये कर्मणि तानूनप्त्रस्पर्शाख्यम् औपसदं कर्म अस्ति. तत्र 1आतिथ्यायां 2ध्रौव्यां स्रुचि चमसे वा यद् आज्यं चतुरवत्तं पञ्चावत्तं वा समवद्यति, तत् तानूनप्त्रम् इति उच्यते. "अनाधृष्टमसि" (तैत्ति.संहि.1।2।10) इति मन्त्रेण षोडशापि

ऋत्विजो यजमानेन सह तानूनप्त्रं समवमृशन्ति, "अनु मे दीक्षाम्" (तत्रैव1।2।10) इति मन्त्रेण यजमानः "तत् समवमृशन् यम् ऋत्विजं कामयेत, अयं यज्ञयशसम् ऋच्छेद् इति तं प्रथमम् अवमर्शयेद्"(आप.श्रौतसू.11।1।4) इति श्रूयते श्रुतौ कल्पे च. अत्र सर्वेषाम् ऋत्विजां तानूनप्त्रित्वाविशेषेऽपि यस्मिन् स्नेहातिशयेन तथेच्छा तत्रैव तथा कृतिः, न इतरेषु. न हि तत्र अविशिष्टेषु कथम् एवं कृतिः इति पर्यनुयोगः सम्भवति, एवम् इहापि इति अर्थः.

ननु श्रवणादेः यथा पुरुषोत्तमसम्बन्धित्वेन तत्प्राप्तिहेतुत्वम्, एवम् अक्षरस्यापि अस्तु इति आशङ्कातु निखिलासुरजीवतमःपुञ्जनिरासकेन यदुवंशो-दयाचलचूडामणिनैव निरस्तेति न स्वतो वक्तुम् उचितेति आशयेन आह तदुक्तम् इति. भगवद्गीतासु इति शेषः. तत्र "यदक्षरं वेदविदो वदन्ति" (भाग.गीता 8।11) इत्युपक्रम्य "स याति परमां गतिम्"(तत्रैव 8।13) इत्यन्तेन अक्षरप्राप्तिः उपायम् उक्त्वा, "अनन्यचेताः सततम्"(तत्रैव 8।14) इत्यादिना स्वप्राप्त्युपायं वैलक्षण्यञ्च उक्त्वा, भक्त्येकलभ्यत्वं स्वस्य वक्तुं पूर्वं क्षराक्षरयोः स्वरूपम् आह "सहस्रयुगपर्यन्तम्"(तत्रैव 8।17) इत्युपक्रम्य "प्रभवत्यहरागमे"(तत्रैव 8। 18) इत्यन्तेन क्षरस्वरूपम् उक्त्वा, "परः तस्मात् तु भावो अन्यः"(तत्रैव 8।20) इत्युपक्रम्य, "तद्धाम परमं मम"(तत्रैव 8।21) इत्यन्तेन अक्षरस्वरूपम् उक्तम्. अत्र पूर्वं क्षरस्वरूपम् उक्तम् इति "परः तस्मात्तु"(तत्रैव 8।20) इत्यत्र क्षरादेव परत्वम् उच्यते, 'तत्'शब्दस्य पूर्वपरामर्शित्वात्. तस्यैव पूर्वम् उक्तत्वात्. अतएव अक्षरव्यावर्तकः 'तु'शब्दः उक्तः. एतेन नित्यत्वेन क्षरणाभावाद् 'अक्षर'शब्देन जीवएव उच्यते, नतु पुरुषोत्तमाधिष्ठानभूतो जीवातीत इति निरस्तम्. "यं प्राप्य न निवर्तन्ते"(तत्रैव8। 21) इतिवाक्याद् जीवे तथात्वासम्भवात्. नित्यमुक्त-त्वापत्त्या शास्त्रवैफल्यापत्तेश्च. इतएव ज्ञानमार्गिणां तत्प्राप्तिरेव मुक्तिः इति ज्ञेयम्. ततो अनिवृत्तेः. "पुरुषः स परः पार्थ"(तत्रैव 8। 22) इत्यनेन अक्षरात् परस्य स्वस्य भक्त्येकलभ्यत्वम् उक्तम्. तेन ज्ञानमार्गीयाणां न पुरुषोत्तमप्राप्तिः इति सिद्धम्. "यस्यान्तःस्थानि"(तत्रैव 8।22) इत्यनेन परस्य लक्षणम् उक्तम्. तच्च मृत्स्नादिप्रसङ्गे श्रीगोकुलेश्वरे स्पष्टम् उच्यते. तेन अक्षरोपासकानां न पुरुषोत्तमोपासकत्वम्, तद्विषयकश्रवणादेः अभावाद् इति भावः. "अव्यक्तो अक्षर इत्युक्तः तम् आहुः परमां गतिम्"(तत्रैव 8।21) इति वाक्यात् "स याति परमां गतिम्"(तत्रैव 8।21) इत्यत्र अक्षरमेव याति इति अर्थो ज्ञेयः. किञ्च, तैत्तिरीयोपनिषत्सु पठ्यते "यस्मिन् इदं सञ्च वि चैति सर्वं यस्मिन् देवा अधिविश्वे निषेदुः, तदेव भूतं तदु भव्यमा इदं तदक्षरे परमे व्योमन्, येन आवृतं खं च दिवम्महीं च येन आदित्यस्तपति तेजसा भ्राजसा च यम् अन्तःसमुद्रे कवयो वयन्ति यदक्षरे परमे प्रजा"(महाना.उप.1।1,2) इति. अत्र अक्षरात्मकत्वेन क्षरात्मकाद् आकाशात् परमे व्योम्नि भक्तानां हृदयाकाशे इति यावत्. तत्र प्रकाशमानम् इति अर्थात्. अतएव "ब्रह्मविद् आप्नोति परम्"(तैत्ति.उप.2।1) इति उपक्रम्य, "सत्यं ज्ञानम् अनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन्"(तत्रैव 2।1) इत्येतद् उपनिषत्स्वेव पठ्यते. "यदक्षरे परमे प्रजा" इति पदम्

'अवयन्ति' इत्यनेन सम्बध्यते. अत्र 'प्रजा' पदाद् व्यापिवैकुण्ठात्मको लोको 'अक्षर'पदेन उच्यते इति अवगम्यते. अतएव "न यत्र माया" (भाग.पुरा. 2।9।10) इत्यादिना श्रीभागवते तत्स्वरूपम् उच्यते. एतेन अक्षरस्य पुरुषोत्तमाधिष्ठानत्वं निश्चीयते. इतोऽपि अक्षरातीतः पुरुषोत्तमः इति अवगम्यते. एवं सति सामान्यं भगवद्विभूतिरूपत्वं, तद्भावः तस्य पुरुषोत्तमस्य भावः सत्ता उक्तरीत्या तत्र स्थितिः इति यावत्, ताभ्यां हेतुभ्यां तथा इत्यपि अर्थो ज्ञेयः॥33॥

इयद् आमननात्॥34॥

ननु संसारनिवृत्यानन्दाविर्भावयोः अविशेषाद् अक्षरे ब्रह्मणि लये पुरुषोत्तमे प्रवेशाद् न्यूनता उक्तौ को हेतुः? इति आकांक्षायाम् आह. इयद् इति परिमाणवचनम्. तस्य श्रुतौ कथनात् इति अर्थः.

अत्र इदं ज्ञेयं : तैत्तिरीयोपनिषत्सु "सैषानन्दस्य मीमांसा भवति" (तैत्ति.उप.2।8) इत्युपक्रम्य, मानुषम् आनन्दम् एकं गणयित्वा, तस्माद् उत्तरोत्तरं शतगुणम् आनन्दं गन्धर्वान् आरभ्य प्रजापतिपर्यन्तस्य उक्त्वा, उच्यते. "ते ये शतं प्रजापतेरानन्दाः, स एको ब्रह्मण आनन्दः"(तत्रैव 2।8) इति. एवं सति इयद् एतावद् इति अक्षरानन्दस्य सावधिकत्वेन श्रुतौ कथनाद् आनन्दमयत्वेन निरवध्यानन्दात्मकत्वस्य पुरुषोत्तमे कथनात् तथोक्तिः इति॥34॥
इति तृतीयाध्याये तृतीयपादे एकादशम् अक्षरधियाम् इति अधिकरणम्॥11॥

## अन्तरा भूतग्रामवत् स्वात्मनः॥35॥ (3।3।12)

अथ ज्ञानमार्गे यथा स्वात्मत्वेन ब्रह्मणो ज्ञानं तथा भक्तिमार्गेऽपि भक्त्या पुरुषोत्तमज्ञाने स्वात्मत्वेन पुरुषोत्तमज्ञानं भवति न वा इति विचार्यते. *सर्वान्तरत्वेन श्रुतौ कथनात् तद् भवति इति पूर्वः पक्षः. तथात्वेऽपि "सर्वस्य वशी सर्वस्य ईशानः"(बृहदा.उप.4।4।22) इत्यादिश्रुतिभिः एवमेव ज्ञानं, नतु तथा इति सिद्धान्तः. अत्र तथाज्ञानाभावस्य आवश्यकत्वार्थं विपरीते बाधकम् आह. पूर्वस्मिन सूत्रे ब्रह्मानन्दाद् भजनानन्दस्य आधिक्यं निरूपितम्. सतु भगवद्दत्तः. तद्व्यवधायको अर्थश्च प्रभुणा न सम्पाद्यते. स्वात्मत्वेन ज्ञानञ्च भजनानन्दान्तरायरूपम्. यदि एतत् सम्पादयेत्, तं न दद्याद्, अग्रे अन्यथा-भावाद्, अतः स्वात्मत्वेन ज्ञानं भक्तिमार्गीयस्य न सम्भवति इति आशयेन आह अन्तरा स्वात्मनः इति. भगवता भक्तिमार्गे स्वीयत्वेन अङ्गीकृतो यः आत्मा जीवः तस्य यद् आत्मत्वेन ज्ञानं तद् भजनानन्दानुभवे अन्तरा व्यवधानरूपमिति भगवता तादृशे जीवे तद् न सम्पाद्यते इति अर्थः. तत् सम्पादनस्य सर्वथैव असम्भावितत्वं हीनत्वं च ज्ञापयितुं दृष्टान्तम् आह भूतग्रामवद् इति. उक्तभक्तस्य विग्रहोऽपि अलौकिकइति तत्र लौकिको भूतग्रामो न

सम्भवति, हीनत्वात् तथा इति अर्थः. अथवा लौकिको भूतग्रामः स्त्रीपुत्रपश्वादिः ब्रह्मानन्दानुभवे बाधकः, तथा भजनानन्दानुभवे स्वात्मत्वेन भगवज्ज्ञानम् इति अर्थः॥35॥
अन्यथाभेदानुपपत्तिरिति चेद् न उपदेशान्तरवत्॥36॥

नन्‌ु भक्तेष्वपि उद्धवादिषु ज्ञानोपदेशः श्रूयते. सच आत्मब्रह्माभेद-ज्ञानफलकः इति आत्मत्वेन ज्ञानाभावे तदभेदोपदेशानुपपत्तिः स्यादिति तद् न मन्तव्यम्. एवं सति भक्तिमार्गाद् ज्ञानमार्गस्य उत्कर्षश्च सिध्यति इति आशङ्क्य, परिहरति उपदेशान्तरवद् इति. न हि अत्र अभेदज्ञानाय उपदेशः किन्तु यथा अग्रिमस्वर्गापवर्गाख्यपारलौकिकानन्दफलकालौकिके कर्मणि अधिकाररूपसं-स्कारार्थं गायत्र्युपदेशः क्रियते, तत्संस्कारसंस्कृतं तच्छरीरादिकमपि भूतादिभि-रपि न उपहतं भवति यथा वा योगोपदेशसंस्कृतस्य वपुः अग्न्यादिभिः न उपहन्यते, तथा प्रकृते भक्तिभावस्य रसात्मकत्वेन संयोगविप्रयोगभावात्मकत्वाद् द्वितीयस्य प्रलयानलाद् अतिकरालत्वेन कदाचित् तद्भावोदये तेन भक्तवपुरादेः तिरोधाने अग्रिमभजानन्दानुभवप्रतिबन्धः स्यादिति तन्निवृत्यर्थं ज्ञानोपदेशसंस्कारसंस्कृतं तद्वपुरादिकं भगवता क्रियते, नतु आत्माभेदज्ञानं भगवतो अभिप्रेतम् इति अर्थः. अन्यथा उपदेशानन्तरं बदरीं गच्छन् विदुरं प्रति “इह आगतो अहं विरहातुरात्मा” (भाग.पुरा.3।4।20) इति न वदेत्. एवमेव अन्येष्वपि भक्तेषु ज्ञेयम्. अत्र ‘उपदेशान्तर’पदं प्रस्तुतोपदेशभिन्नम् 1उपदेशान्तरम् आह इति प्रस्तुतस्य तस्य अन्यस्य अभावाद् ‘अभेद’पदेन अभेदोपदेशएव उच्यते.

एतेन भगवान् स्वीयानां भक्तिभावप्रतिबन्धनिरासायैव सर्वं करोति इति ज्ञापितं भवति. अथवा. ‘उपदेशान्तरवद्’ इत्यस्य अयम् अर्थः. शरीराद्यध्यासवतः तद्भिन्नः आत्मा तत्त्वं, नतु शरीरादिः इति उपदेशो ज्ञानमार्गे यथा क्रियते, तेन शरीरादौ आत्मबुद्ध्या यः स्नेहादिः, सो अपगच्छति, तथा अत्र सर्वेषाम् आत्मनो हि आत्मा “यः आत्मनि तिष्ठन्” (बृहदा.उप.3।5?) इत्यादिश्रुतिसिद्धो जीवात्मनोऽपि आत्मा पुरुषोत्तमः इति बोध्यते. तेन पुरुषोत्तमे निरुपधिः स्नेहः तत्सम्बन्धित्वेन आत्मनि सः सिध्यति. यद्यपि एवम्भावः पूर्वमपि आसीदेव, तथापि सहजस्य शास्त्रार्थत्वेन ज्ञाने 2सति प्रमोदो दाढर्यं च भवति इति तथा. न एतावता जीवाभेदः आयाति. अग्रे जीवनसम्पत्तिरेव उपदेशकार्यं, नतु तेन पूर्वभावोपमर्दः सम्भवति इति सारम्. तेन ज्ञाने सर्वाधिक्यं मन्वानाय भक्तिबलप्रदर्शनं च सिध्यति॥36॥
व्यतिहारो विशिंषन्ति हीतरवत्॥37॥

ननु “तद् यो अहं सो असौ यो असौ सो अहम्”(ऐत.आर.2।12।2) इति ऐतरेयके, तैत्तिरीयके च “अहम् अस्मि ब्रह्म अहम्”(महाना.उप.5।10) इति पठ्यते. अत्र मध्यस्थं ‘ब्रह्म’ पदम् उभयत्र सम्बध्यते. तेन आवृत्त्या व्यतिहारः. अतो ब्रह्माभेदः सिध्यति. तथा लीलामध्यपातिभक्तानामपि “कृष्णो अहम् अहं कृष्णः”(भाग.पुरा.10।19।27) इति भावः उल्लेखश्च श्रूयते. अतः तदभेदज्ञानं भक्तिफलम् इति पुम्फुल्यमानं प्रतिवादिनं तत्स्वरूपं बोधयति. रसात्मकत्वाद् भक्तेः संयोगविप्रयोगात्मकत्वाद् द्वितीयभावोद्रेके यथा

इतरे अश्रुप्रलापादयो व्यभिचारिभावाः, तथा अतिविगाढभावेन तदभेदस्फूर्तिरपि एकः, सच न सार्वदिकः, तदा स्वात्मानं तत्त्वेन विशिंषन्ति, तं च स्वात्मत्वेन. सो अत्र व्यतिहारपदार्थः इति अर्थः. अपरञ्च. उद्देश्यविधेयभावस्फूर्तौ न हि अद्वैतज्ञानम् अस्ति, किन्तु भावनामात्रं, भक्तानान्तु विरहभावे तदात्मकत्वमेव अखण्डं स्फुरति, येन तल्लीलां स्वतः कुर्वन्ति. एतद् यथा तथा श्रीभागवतदशमस्कन्धविवृतौ प्रपञ्चितम् अस्माभिः. एवं सति मुख्यं यद् अद्वैतज्ञानं तद् भक्तिभावैकदेश-व्यभिचारिभावेषु एकतरद् इति सर्षपस्वर्णाचल-योरिव ज्ञानभक्त्योः तारतम्यं कथं वर्णनीयम् इति भावः॥37॥
इति तृतीयाध्याये तृतीयपादे द्वादशम् अन्तरा भूतग्रामवद् इति अधिकरणम्॥12॥

## सैव हि सत्यादयः॥38॥ (3।3।13)

अथ इदं विचार्यते : प्राप्तभक्तेः पुरुषस्य सत्य-शम-दमादयो विधीयन्ते न वा इति. फलोपकार्यन्तरङ्गसाधनत्वात् शुद्धौ सत्यामेव चित्ते *भगवत्प्रादुर्भाव-सम्भवाद् विधीयन्ते इति पूर्वः पक्षः. तादृशस्य ते न विधीयन्ते इति सिद्धान्तः. तत्र हेतुम् आह हि यस्मात् हेतोः. सैव भक्तिरेव सत्यादिसर्वसाधनरूपा. तस्यां सत्यां सत्यादयो ये ज्ञानमार्गे विहितत्वात् कष्टेन क्रियन्ते मुमुक्षुभिः, ते भक्तहृदि भगवत्प्रादुर्भावात् स्वतएव भवन्तीति न विधिम् अपेक्षन्ते इति अर्थः॥38॥
कामादीतरत्र तत्र चायतनादिभ्यः॥39॥

पूर्वसूत्रे शास्त्रोक्ताखिलसाधनरूपत्वं भक्तेः उक्तं तद्दाढर्यार्थम् अधुना मुक्तिप्रतिबन्धकत्वेन हेयत्वेन उक्तानां कामादीनामपि भगवत्सम्बन्धाद् मुक्तिसाधकत्वम् उच्यते. भक्तिस्तु विहिताविहिता च इति द्विविधा. माहात्म्य-ज्ञानयुतेश्वरत्वेन प्रभौ निरुपधिस्नेहात्मिका विहिता. अन्यतो अप्राप्तत्वात् कामाद्युपाधिजा सातु अविहिता. एवम् उभयविधायाअपि तस्याः मुक्तिसाधकत्वम् इति आह.

इतरत्र विहितभक्तेः इति शेषः. कामाद्युपाधिजस्नेहरूपायां कामाद्येव मुक्तिसाधनम् इति अर्थः, भगवति चित्तप्रवेशहेतुत्वात्. 'आदि'पदात् पुत्रत्व-सम्बन्धित्वादयः. स्नेहत्वाभावेऽपि अविहितत्वभगवद्विषयकत्वयोः अविशेषाद् द्वेषादिरपि संगृह्यते. तेन भगवत्सम्बन्धमात्रस्य मोक्षसाधकत्वम् उक्तं भवति. तत्र विहितभक्तौ इति अर्थः. शास्त्रे सर्वथा हेयत्वेन उक्ता हि गृहाः. सर्वनिवेदनपूर्वकं गृहेषु भगवत्सेवां कुर्वतां तदुपयोगित्वेन तेभ्यएव मुक्तिः भवति इति अर्थः. एतादृशानां गृहा भगवद्‌गृहाएव इति ज्ञापनाय 'आयतन'-पदम्, तेषु तथाप्रयोगप्राचुर्यात्. 'आदि'पदेन स्त्रीपुत्रपश्वादयः संगृह्यन्ते. एतेन ज्ञानादिमार्गाद् उत्कर्षः उक्तो भवति, बाधकानामपि साधकत्वात्. माहात्म्यज्ञानपूर्वकस्नेहे सत्येव भर्तृत्वेन ज्ञाने कामोऽपि सम्भवति इति ज्ञापनाय 'च'कारः॥39॥13॥
इति तृतीयाध्याये तृतीयपादे त्रयोदशं सैव हि सत्यादयः इति अधिकरणम्॥13॥

## आदराद् अलोपः॥40॥ (3।3।14)

ननु नित्यानां वर्णाश्रमधर्माणां भगवद्धर्माणां च एककाले प्राप्तौ युगपद् उभयोः करणासम्भवाद् अन्यतरबाधे प्राप्ते, कस्य स्याद् न कस्य इति स्यात् संशयः. तत्र कर्मणां स्वस्वकाले विहितानाम् अकरणे प्रत्यवायश्रवणाद् इतरत्र अतथाश्रवणाद् अन्यदापि तत्कृतिसम्भवात् सावकाशत्वेन तेषामेव बाधो युक्तः, नतु निरवकाशानाम् इति पूर्वः पक्षः.

तत्र सिद्धान्तम् आह आदराद् इति. ब्रह्मयज्ञप्रकरणे तैत्तिरीयकैः पठ्यते "ॐ इति प्रतिपद्यत एतद् वै यजुस्त्रयीं विद्यां प्रत्येषा वागेतत् परमम् अक्षरं तदेतद् ऋचाभ्युक्तं ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधिविश्वे निषेदुर् यस् तन् न वेद किम् ऋचा करिष्यति य इत् तद् विदुस्त इमे समासत इति"
(तैत्ति.आर.2।11।1) इति.

अत्र ऋक्सम्बन्धित्वेन वर्णात्मके, वस्तुतस्तु परमव्योमात्मके अक्षरे ब्रह्मणि ॐकारे वर्तमानं तल्लोकवेदप्रसिद्धं परं ब्रह्म "यो न वेद, स किम् ऋचा करिष्यति" इत्यनेन तदज्ञाने वेदाध्ययनस्य निष्फलत्वम् उच्यते. एवं सति तदुक्तकर्मणोऽपि तथात्वम् आयाति. एतेन "भक्त्या माम् अभिजानाति" (भग.गीता 18।55) इति वाक्यात् परब्रह्मस्वरूपज्ञानं भक्त्यैव इति भक्ताः सन्तः पुरुषोत्तमविदो ये, तेषामेव वेदाध्ययनादिकं फलप्रदं, न अन्येषाम् इति उक्तं भवति. अतएव श्रीभागवतेऽपि उक्तम् "ऋषयोऽपि देव युष्मत्प्रसङ्ग-विमुखा इह सञ्चरन्ति" (भाग.पुरा.3।9।1), 'संसरन्ति' इति वा. अन्वये निदर्शनं ये इद् ईश्वरत्वेन तत् पूर्वोक्तं परं ब्रह्म विदुः, ते इमे भक्ताः सर्वापेक्षया सम्यक्प्रकारेण भगवन्निकटे श्रीगोकुलवैकुण्ठादिषु आसते इति. तेन अन्येषां सम्यग् असत्त्वम् अर्थाक्षिप्तं भवति. पुरःस्थितार्थवाची 'इदं'शब्दप्रयोगेण च अन्येषाम् असत्तुल्यत्वं श्रुतेः अभिमतम् इति ज्ञायते. ऋक्शाखायामपि

"तमु स्तोतारः पूर्व्यं यथाविद ऋतस्य गर्भं जनुषा पिपर्तन,
आस्य जानन्तो नाम चिद् विवक्तन
महस्ते विष्णो सुमतिं भजामहे"

(ऋग्वेद 1।164।39) इत्यादि ऋग्भिः अन्येभ्यो धर्मेभ्यः सकाशाद् भगवद्धर्मेषु आदरः श्रूयते इति तेषाम् अलोपएव इति अर्थः. एतेन "अकरणे प्रत्यवायश्रवणाद्" इत्यादि यद् उक्तं तदपि प्रत्युक्तं वेदितव्यम्. करणेऽपि वैयर्थ्यात् तदपरिहारात्. एवं सति यद् अकरणे प्रत्यवायकथनं तेन तस्माद् अवकाशं प्राप्य गौणकालेऽपि अकरणे तथा इति तस्य आशयः इति ज्ञायते॥40॥

ननु एवं तात्पर्यकत्वे श्रुतेः उपनयनादिवत् कर्मोपयोगित्वं भक्ति-तज्ज्ञानयोः स्यादिति कर्मणएव प्राधान्यं, नतु भक्तेः सिध्यति इति आशङ्क्य, भक्ति-तज्ज्ञानावश्यकत्व-बोधकश्रुतितात्पर्यम् आह.

उपस्थिते अतः तद्वचनात्॥41॥

तयोः युगपत्करणे अनुपस्थितेऽपि यदि पूर्वं भगवद्धर्मकरणम् उच्यते, तदा त्वदुक्तं स्याद्, नतु एवं, किन्तु उभयोः युगपत्करण उपस्थितेः बलाबल-विचारे क्रियमाणे, अतः आदराद् हेतोः तद्वचनाद् भगवद्धर्माणां बलवत्त्वेन अलोपवचनाद् न कर्माङ्गत्वम् एतेषां सिध्यति इति अर्थः॥41॥

इति तृतीयाध्याये तृतीयपादे चतुर्दशम् आदरादलोपः इति अधिकरणम्॥14॥

तन्निर्धारणानियमः तद्दृष्टेः

## पृथग् हि अप्रतिबन्धः फलम्॥42॥ (3।3।15)

अथ इदं विचार्यते : पुरुषोत्तमविदः कर्म कर्तव्यं न वा इति. तत्र मार्गत्रयफलात्मके तस्मिन् सम्पन्ने पुनः तस्य स्वतो अपुरुषार्थस्य करणम् अप्रयोजकमिति न कर्तव्यमेव इति पूर्वः पक्षः.

तत्र सिद्धान्तम् आह तन्निर्धारणेत्यादिना. अत्र इदम् आकूतम् : भक्तिमार्गेहि मर्यादापुष्टिभेदेन अस्ति द्वैविध्यम्. तत्र मर्यादायां पुष्टौ च एतादृशस्य न कर्मकरणं सम्भवति. अतएव तैत्तिरीयकोपनिषत्सु पठ्यते "आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति" (तै.उप.2।4). "एतं ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरवम्" (तत्रैव 2।9) इति. श्रूयते च उभय-विधानामपि कर्मकरणम् अम्बरीषोद्धव-पाण्डवादीनाम्. एवं सति उभयविधानां मध्ये "मम कर्मकरणे प्रभोः इच्छा अस्ति" इति यो निर्धारयति, स करोति. यः एतद् विपरीतम्, स न करोति, यथा शुकजडादिः. एतन्निर्धारश्च भगवदधीनः, अतो भक्तेष्वपि तन्निर्धारणानियमः, अतः कर्म कर्तव्यमेव अतन्निर्धारणेतु1 आधुनिकानाम्. एवं सति इच्छाज्ञानवता तत्सन्देहवता च कर्म कर्तव्यम् इति सिद्धम्. तत्र उभयोः फलं वदन् आदौ आद्यस्य आह तद्दृष्टेः. तस्याः भगवदिच्छायाः दृष्टिः ज्ञानं यस्य सः तथा. तस्य जीवकृतकर्मफलात् पृथग् भिन्नम् ईश्वरकृतकर्मणो यत् फलं वेदमर्यादारक्षा लोकसंग्रहश्च तत् फलम् इति अर्थः.

'हि'शब्देन "सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत, कुर्याद् विद्वांन् तथासक्तः चिकीर्षुः लोकसंग्रहम्"(भग.गीता 3।25) इति भगवद्वाक्य-रूपोपपत्तिः सूचिता. द्वितीयस्य मध्यमाधिकारात् 2कालसङ्गादिजनितचित्तमालि-न्येन भगवत्सान्निध्ये प्रतिबन्धः स्यात्, तन्निवृत्तिः तत्कृतकर्मणः फलम् इति अर्थः.

अथवा. पूर्वसूत्राभ्यां भगवद्धर्मकृतेः आवश्यकत्वम् उक्तम्. सर्वात्म-भाववतो "न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेद् इह"(भाग.पुरा.11।20।31) इति भगवद्वचनाद् विधेयाभावाद् असम्भवाच्च कर्मज्ञानयोः विहितभक्तेश्च करणं न सम्भवतीति तस्य किं फलम्? इति आकांक्षापूरणाय तद् अनुवदति तन्निर्धारणेत्यादिना. तस्मिन् धर्मिण्येव नतु धर्मेष्वपि दृष्टिः यस्य सः तथा. 'दृष्टि'पदेन ज्ञानमात्रम् उच्यते. तेन अन्यविषयकदर्शनश्रवणादिज्ञानाभावः उक्तो भवति. एतादृशस्य प्रभुसङ्गममात्रम्

अपेक्षितम्. तत्र भगवदुक्तस्वसङ्गमा-वधिकस्य भक्तस्य सङ्गमसमयनिर्धारो भवति. अतादृशस्य तस्य सः न इति तन्निर्धारणानियमः. एतेन फलप्राप्तेः प्रागवस्था उक्ता भवति. फलस्वरूपम् आह पृथक् फलम् इति. अस्य अनिर्वचनीयत्वाद् अनुभवैकवेद्यत्वाद् मोक्षान्तं यत् फलं शास्त्रे उक्तं तस्माद् भिन्नम् इति उक्तम्. अन्यत्र हि धर्माणां साधनत्वं, यत्र फलमेव साधनं, तत्फलस्य अनिर्वाच्यता युक्तैव इति 'हि'शब्देन आह. ज्ञानमोक्षादिना तद्भावाप्रतिबन्धश्च फलम् इति अर्थः. प्रासङ्गिकम् एतत् सूत्रम् ॥42॥
इति तृतीयाध्याये तृतीयपादे पञ्चदशं तन्निर्धारणाधिकरणम्॥15॥

## प्रदानवदेव तदुक्तम्॥43॥ (3।3।16)

अथ इदं विचार्यते : सर्वात्मभावो विहितकर्मज्ञानभक्तिसाध्यो न वा? इति. तत्र पुराणे "तस्मात् त्वम् उद्धव! उत्सृज्य" (भाग.पुरा.11।12।14) इति उपक्रम्य, "मामेकमेव शरणम् आत्मानं सर्वदेहिनां, याहि सर्वात्मभावेन यास्यसे ह्यकुतोभयम्"(तत्रैव 11।12।15) इतिवाक्ये मुक्त्यात्मकाकुतोभयसाधन-रूपशरणगमने प्रकारत्वेन सर्वात्मभावस्य कथनेन स्वप्रयत्नसाध्यत्वं गम्यते. अतः साधनसाध्यः इति पूर्वः पक्षः.

तत्र सिद्धान्तं वक्तुं तदुपदेशस्वरूपम् आह प्रदानवद् इति. यदि अयं साधनोपदेशः स्यात्, तदा साधनत्वेन सर्वात्मभावेन शरणप्राप्तेः स्वकृतिसाध्यत्वं, नतु एवं, किन्तु, तदुक्तं भगवदुक्तम्. प्रदानवत्. प्रकृष्टं दानं प्रदानं वरदानम् इति यावत्, तद्वदेव इति अर्थः. वरेण हि स्वकृत्यसाध्यमपि सिध्यतीति तथा. शत्रुसंहारभयादिनापि शरणाप्तिः भवति, तत्र न तस्याः पुरुषार्थत्वं, किन्तु तन्निवृत्तेरेव. प्रकृतेऽपि सर्वात्मभावे स्वरूपप्राप्तिविलम्बासहिष्णुत्वेन अत्यार्तौ स्वरूपातिरिक्तास्फूर्त्या तद्भावस्वाभाव्येन गुणगानादिसाधनेषु कृतेष्वपि अप्राप्तौ स्वाशक्यत्वं ज्ञात्वा प्रभुमेव शरणं गच्छति, एतच्च न स्वकृतिसाध्यम् इति सुष्ठूक्तम् प्रदानवद् इति. भक्तस्य ईप्सितो अर्थोहि वरो भवति. सर्वात्मभावस्य अनुभवैकवेद्यत्वेन पूर्वम् अज्ञानेन ईप्सितत्वासम्भवेऽपि स्वतएव कृपया दानमिति वदति इति उक्तम्. अथवा "सर्वात्मभावेन मां याहि" इति सम्बन्धः.

यद्वा. प्रदानवद् इत्यस्य पूर्ववदेव व्याकृतिः. तत्र साधनासाध्यत्वे प्रमाणम् आह तदुक्तम् इति. "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन, यमेवैष वृणुते तेन लभ्यः" (कठोप.1।2।23) इतिश्रुत्या वरणातिरिक्त-साधनाप्राप्यत्वम् उच्यतइति तत् तथैव इति अर्थः. भगवदुक्ता'कुतोभय'पदस्य न मुक्तिः अर्थः, किन्तु "यतो वाचो" (तैत्ति.उप.2।4) इत्यादिना आनन्दस्य स्वरूपम् उक्त्वा "आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन" (तत्रैव) इति श्रुत्युक्तं यत् पूर्वोक्तं रसात्मकपुरुषोत्तमभजनानन्दानुभवोत्तरकालीनम् अकुतोभयं तदर्थः॥43॥
इति तृतीयाध्याये तृतीयपादे षोडशं प्रदानवद् इति अधिकरणम्॥16॥

ननु प्रतिबन्धक-कालादृष्टादि-सद्भावेऽपि वरणकार्यं स्याद्, उत तन्निवृत्तौः इति संशये, प्रतिबन्धकाभावस्य सर्वत्र हेतुत्वात् तन्निवृत्तावेव तथा इति पूर्वपक्षे, सिद्धान्तम् आह लिङ्गेत्यादिना.

## लिङ्गभूयस्त्वात् तद्धि बलीयः तदपि॥44॥ (3।3।17)

सामोपनिषत्सु नवमे प्रपाठके सनत्कुमारनारदसंवादे प्रथमतएव मुख्या ब्रह्मविद्योपदेशार्हा न भवति इति ज्ञात्वा, सनत्कुमारो नारदाधिकारं च ज्ञातुं "यद् वेत्थ तेन मोपसीद"(छान्दो.उप.7।1।2) इत्युक्तो नारदः स्वयं विदितम् ऋग्वेदादिसर्पदेवजनविद्यान्तम् उक्त्वा, "सोहं भगवो मन्त्रविदेवास्मि" (तत्रैव 7।1।3) इति स्वाधिकारम् उक्त्वा आह "नात्मवित् श्रुतं ह्येवमेव भगवद्-दृशेभ्यः तरति शोकम् आत्मविद् इति, सो अहं भगवः शोचामि तं मां भगवान् शोकस्य पारं तारयतु"(तत्रैव 7।1।3) इति नारदेन उक्तः. सनत्कुमारः पूर्वस्मात् पूर्वस्मात् भूयो वदेति पृष्टः. 'भूयः'पदम् अधिकार्थकं, नाम-वाङ्-मनःसङ्कल्पचित्तध्यानविज्ञानबलाद् न आपस्तेज-आकाश-स्मराशा-प्राणान् ब्रह्मत्वेन उपासनाविषयत्वेन उक्त्वा, प्राणोपासकस्य अतिवादित्वं सत्यवादित्वेन उक्त्वा, विजिज्ञासितव्यत्वेन सत्यविज्ञानम् अतिश्रद्धानिष्ठाकृतिसुखानि पूर्वपूर्व-कारणत्वेन उत्तरोत्तराणि उक्त्वा, सुखस्वरूपजिज्ञासायाम् आह "यो वै भूमा तत् सुखम्" (छान्दो.उप.7।23।1) इति. भूम्नः स्वरूपजिज्ञासायाम् आह "यत्र नान्यत् पश्यति नान्यत् श्रुणोति नान्यद् विजानाति स भूमा" (तत्रैव 7।24।1) इति. एतेन सर्वात्मभावस्वरूपमेव उक्तं भवति. तत्र विरहभावे अतिविगाढभावेन सर्वत्र तदेव स्फुरति इति "स एवाधस्ताद्" (तत्रैव 7।25।1) इत्यादिना उक्त्वा, कदाचित् स्वस्मिन्नेव भगवत्त्वस्फूर्तिरपि भवति इति "अथ अहङ्कारादेशः" (तत्रैव7।25।1) इत्यादिना ताम् उक्त्वा, एतेषां व्यभिचारिभावत्वेन अनियतत्वं ज्ञापयितुं पुनः सर्वत्र भगवत्स्फूर्तिम् आह "अथात आत्मादेशः" (तत्रैव 7।25। 2) इत्यादिना. ततः संयोगभावे (अ)सति पूर्वभावेन सर्वोपमर्दिना स्वप्राणादि-सर्वतिरोधानेन अग्रिमलीलानुपयोगित्वं न शङ्कनीयं, यतो भगवतएव सर्वसम्पत्तिः इति आशयेन "तस्य ह वा एतस्यैवं पश्यतः" इति उपक्रम्य, "आत्मत एवेदं सर्वम्"(तत्रैव7।26।1) इति उक्तवान्. ततः श्लोकैः तद्भावस्वरूपम् उक्त्वा एतस्य मूलकारणम् आह "आहारशुद्धौ" (तत्रैव 7।26।2) इत्यादिना. प्राणपोषको हि आहारः. तस्य सदोषत्वेतु न किञ्चित् सिध्यति. एवं सति भगवदतिरिक्तस्य स्वतो निर्दोषत्वाभावाद् भगवानेव चेत् प्राणपोषको भवेत्, तदा सर्वं सम्पद्यते. सच सर्वात्मभावे सत्येव भवति. *सच तथा तद्वरणं विना न भवति. तच्च उक्तकार्यानुमेयम् इति वरणलिङ्गं सर्वात्मभावः, तस्यैव भूयस्त्वात् सर्वतो अधिकत्वात् तद्वरणमेव सर्वतः कालादेः बलीयः इति अर्थः. यल्लिङ्गमेव सर्वतो अधिकं, तस्य तथात्वे किं वाच्यम् इति कैमुतिकन्यायोऽपि सूचितः. ज्ञानमार्गीयज्ञानेन प्रतिबन्धशङ्कायाम् आह तदपि

इति. उक्तम् इति शेषः. "अन्तरा भूतग्रामवत् स्वात्मनः" (ब्रह्मसू.3।3।35) इतिसूत्रेण. तच्च उपपादितम् अस्माभिः॥44॥

पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत्॥45॥

तत्र आह, न अत्र वरणलिङ्गभूयस्त्वं निरूप्यते किन्तु आत्मज्ञान-प्रकारविशेषएव. तथाहि. पूर्वप्रपाठके आत्मना सह अभेदः सर्वस्य निरूपितः श्वेतकेतूपाख्यानेन. अग्रिमे च "सोऽहं भगवो मन्त्रविदेवास्मि नात्मविद्" (छान्दो.उप.7।1।3) इत्यादिना नारदस्य आत्मजिज्ञासैव उक्ता. एवं सति उत्तरमपि तद्विषयकमेव भवितुम् अर्हति. अतः आत्मप्रकरणत्वाद् उभयोः प्रपाठकयोः पूर्वस्मिन् यद् अभेदः उक्तः, तस्यैव स्वरूपम् "आत्मत एव इदं सर्वम्" (तत्रैव 7।26।1) इत्यन्तेन उक्तम् इति पूर्वोक्तप्रकाराद् अन्येन प्रकारेण आत्माभेदएव सर्वस्य उक्तः. तदेव आह. पूर्वस्य पूर्वप्रपाठकोक्तात्माभेदज्ञानस्य विकल्पः प्रकारभेदएव अग्रेऽपि निरूप्यते. तत्र उपपत्तिम् आह प्रकरणाद् इति. एतत्तु उपपादितम्. अत्र सिद्धान्तिसम्मतमेव दृष्टान्तम् आह तद््धृदयसंवादार्थं क्रिया मानसवद् इति. यथा पूजनप्रकरणे बाह्यं तत्क्रियारूपम् उच्यते, आन्तरन्तु मनोव्यापाररूपम् उच्यते. नहि एतावता अन्यतरस्य तद्भिन्नत्वं वक्तुं शक्यं, प्रकरणभेदात्. तथा इहापि इति अर्थः॥ 45॥

अतिदेशाच्च॥46॥

नामरूपात्मकं हि जगत्, तत् पूर्वं 'सर्व'शब्देन अनूद्य तस्मिन् ब्रह्माभेदो निरूपितः. अग्रेतु ऋगादिविद्या अनूद्य नामात्मकब्रह्मत्वं तत्र अतिदिश्यते. "नामैव एतन्नामोपास्स्व" (छान्दो.उप.7।1।4) इति. इतोऽपि हेतोः ज्ञानप्रकारभेदएव अग्रे निरूप्यते इति अर्थः॥46॥

विद्यैव तु निर्धारणात्॥47॥

'तु'शब्दः पूर्वपक्षं व्यावर्तयति. यदुक्तं सनत्कुमार-नारदसंवादे आत्मज्ञानप्रकारविशेषएव निरूप्यते इति, तद् न, किन्तु विद्यैव निरूप्यते इति.

अत्र इदम् आकूतम् : "नायमात्मा"(कठोप.2।22) इति श्रुतिः इतर-साधननिषेधपूर्वकं वरणस्य साधनत्वम् उक्त्वा वृतलभ्यत्वे *हेतुं वदन् वरणविषयमपि आह "तस्यैष आत्मा वृणुते तनुं स्वाम्" इति. 'तस्य' वृतस्य आत्मनः 'एषः' भगवान् 'आत्मा', अतएव तत्तनूरूपः सः जीवात्मा. तद्वरणस्य आवश्यकत्वज्ञापनाय 'स्वाम्' इति. सर्वोहि स्वकीयां तनुम् आत्मीयत्वेन आत्मत्वेन च वृणुते, तद्विशिष्टएव भोगान् भुङ्क्ते. अतएव तैत्तिरीयको-पनिषत्स्वपि "ब्रह्मविदाप्नोति परम्"(तैत्ति.उप.2।1) इति सामान्यतो ब्रह्मविदः परब्रह्मप्राप्तिम् उक्त्वा, अग्रिमर्चा विशेषतो अवदन् "सत्यं ज्ञानम् अनन्तं ब्रह्म"(तत्रैव 2।1) इति परब्रह्मस्वरूपम् उक्त्वा "यो वेद निहितं गुहायां परमे व्योमन् सो अश्नुते सर्वान् कामान्

सह ब्रह्मणा विपश्चिता"(तत्रैव 2।1) इति उक्तम्. एतद् यथा तथा आनन्दमयाधिकरणे प्रपञ्चितम् अस्माभिः.

किञ्च, पुरुषोत्तमलाभे हेतुभूतन्तु भक्तिमार्गे यद् वरणं स्वीयत्वेन अङ्गीकाररूपं तदेव, नतु अन्यादृशमपि इति ज्ञापनाय अग्रे वदति "नायमात्मा बलहीनेन लभ्यः" (मुण्ड.उप.3।2।3) इति. 'बल' कार्यं हि प्रभुवशीकरणम्. तच्च "अहं भक्तपराधीनः" (भाग.पुरा.9।4।63) "वशे कुर्वन्ति मां भक्त्या" (तत्रैव 9।4।66) इत्यादिवाक्यैः 'भक्त्यैव' इति 'बल'शब्देन भक्तिः उच्यते. अन्यथा पूर्ववाक्यएव इतरनिषेधस्य कृतत्वात् पुनः बलाभावनिषेधं न कुर्यात्. वरणमात्रस्य हेतुत्वम् उक्त्वा बलस्य तथात्वं च न वदेत्. एतादृशस्य हृदि भगवत्प्राकट्यं भवति इति आह "एतैः उपायैः यतते यस्तु विद्वान् तस्य एष आत्मा विशते ब्रह्मधाम" (मुण्ड.उप.3।2।4) इति. अस्य अर्थस्तु 'एषः आत्मा' आत्मनोऽपि आत्मा पुरुषोत्तमः 'ब्रह्म' अक्षरब्रह्मात्मकं धामः विशते इति. 'धाम'पदं पुरुषोत्तमस्य अक्षरं ब्रह्म सहजं स्थानम् इति ज्ञापनार्थम् उक्तम्, अन्यथा न वदेत्. तेन तद्धृदये स्वस्थानम् आविर्भावयित्वा स्वयं तत्र प्रकटी-भवति इति ज्ञाप्यते. प्रकृते श्वेतकेतूपाख्याने परोक्षवादेन ब्रह्माभेदबोधनेन पुरुषोत्तमाधिष्ठानत्वयोग्यता ज्ञाप्यते. अग्रेतु न हि एतावतैव अधिष्ठाना-त्मकाक्षराविर्भावो भवति, पुरुषोत्तमस्य वा. तथा सति ज्ञानिनां सर्वेषां परप्राप्तिः स्याद्, नतु एवं, "भक्त्याहमेकया ग्राह्य"(भाग.पुरा.11।24।21) इत्यादि-वाक्यैः, किन्तु भगवदनुग्रहेण भक्तसङ्गेन च भक्तौ सत्याम् इति ज्ञापनाय भक्तएव तद्बोधाधिकारी इत्यपि ज्ञापयितुं भक्तस्य नारदस्य भगवदावेशयुक्तस्य सनत्कुमारस्य च संवादः उक्तः. तत्र 'आत्म'शब्देन पुरुषोत्तम उच्यते. भक्तिमार्गेतु निरुपधिस्नेहविषयः सएव यतः. सतु सर्वात्मभावैकसमधिगम्यइति सर्वात्मभावएव 'विद्या'शब्देन उच्यते. परमकाष्ठापन्नं यद् वस्तु, तदेव हि वेदान्तेषु मुख्यत्वेन प्रतिपाद्यम्. अक्षरब्रह्मादिकन्तु तद्विभूतिरूपत्वेन तदुपयोगित्वेन मध्यमाधिकारिफलत्वेन च प्रतिपाद्यते. तेन तत्र 'विद्या'शब्दप्रयोगः औपचारिकः, सर्वात्मभावएव मुख्यः. युक्तं च एतत्. अक्षरविषयिण्या विद्यायाः सकाशात् ततः उत्तमविषयिण्याः तस्या उत्तमत्वम्. एवं सति पूर्वप्रपाठकस्य अक्षरप्रकरणत्वाद् उत्तरस्य पुरुषोत्तमप्रकरणत्वात् त्वद्भेत्वसिद्धिश्च, अतः उक्तन्यायेन विद्यैव अग्रिमप्रपाठके निरूप्यते, नतु पूर्वोक्तात्मज्ञानप्रकारविशेषः. अत्र हेतुम् आह निर्धारणाद् इति. "सुखं त्वेव विजिज्ञासितव्यम्" (छान्दो.उप.7।22।1) इति उक्त्वा, सुखस्वरूपम् आह "यो वै भूमा तत् सुखं, नाल्पे सुखम् अस्ति, भूमैव सुखं, भूमा त्वेव विजिज्ञा-सितव्यः" (तत्रैव 7।23।1) इति. अक्षरपर्यन्तं गणितानन्दत्वात् पुरुषोत्तमस्यैव आनन्दमयत्वेन निरवधिसुखात्मकत्वात् सएव भूमा, तस्यैव विजिज्ञासितव्यत्वेन निर्धारणाद् इति अर्थः. भूम्नो लक्षणम् अग्रे उच्यते "यत्र नान्यत् पश्यति" (तत्रैव 7।24।1) इत्यादिना. यस्मिन् ज्ञाते सति "नान्यत् पश्यति" इति अर्थः. तथा सति सर्वात्मभाववतः प्रभुदर्शने सत्यपि लीलोपयोगिवस्तुदर्शनादिकम् अनुपपन्नम् इति शङ्कातु "तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मनः

प्राणाः" (तत्रैव 7।26।1) इत्यादिना निरस्ता वेदितव्या. तैः सह लीलां चिकीर्षतः प्रभुतएव सर्वं सम्पद्यते नतु भक्तसामर्थ्येन इति भावेन तदुक्तेः॥47॥

दर्शनाच्च॥48॥

दृश्यते च सर्वात्मभाववतां भक्तानां व्रजसीमन्तिनीप्रभृतीनां पूर्वम् इतरविस्मृतिः भगवत्स्पर्शादिना अग्रे सर्वसामर्थ्यम् इति व्यासः स्वानुभवं प्रमाणत्वेन आह. उक्तं च श्रीभागवते ताभिरेव "चित्तं सुखेन भवता अपहृतं गृहेषु यद् निर्विशति उत करावपि गृह्यकृत्ये, पादौ पदं न चलतः तव पादमूलाद्" (भाग.पुरा.10।29।34) इत्यादिना. तेन ज्ञानशक्ति-क्रियाशक्ति-तिरोधानम् उक्तं भवति. अग्रे तदाविर्भावादिकं स्फुटमेव॥48॥

ननु सनत्कुमार-नारदसंवादात्मकम् एकं वाक्यं, तत्र उपक्रमे "मन्त्रविदेव अस्मि नात्मवित् श्रुतं ह्येवं मे भगवद्दृशेभ्यः तरति शोकम् आत्मविद् इति, सोऽहं भगवः शोचामि" (छान्दो.उप.7।1।3) इत्यादिना स्वात्मज्ञानस्यैव उपक्रमाद् उपसंहारोपि तम् आदायैव उचितः. अग्रे चेद् 'आत्म'पदानाम् ईश्वरपरत्वं स्याद्, वाक्यभेदः उपक्रमविरोधश्च स्यात्. तस्माद् वाक्यानुरोधात् पूर्वज्ञानप्रकारविशेषएव अयम् इति मन्तव्यम् इत्यतः उतरं पठति

श्रुत्यादिबलीयस्त्वाच्च न बाधः॥49॥

न एवं वाक्यानुरोधाद् वरणज-सर्वात्मभावलिङ्गभूयस्त्वं बाधितव्यम्. वाक्यापेक्षया श्रुति-लिङ्गयोः बलीयस्त्वात्. एतद्बलीयस्त्वन्तु "श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्यम्" (जैमि.सू.3।3।13) इति जैमिनीयसूत्रे सिद्धम्. प्रकृते इतरसाधननिषेधपूर्वकं "यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा वृणुते तनुं स्वाम्" (मुण्ड.उप.3।2।3) इति श्रुतिः वरणमात्रलभ्यत्वम् आह. एतदग्रे च "नायमात्मा बलहीनेन लभ्यः" (मुण्ड. उप.3।2।3) इति उपक्रम्य, "एतैः उपायैः यतते यस्तु विद्वान् तस्यैष आत्मा विशते ब्रह्मधाम" (मुण्ड.उप.3।2।4।) इतिश्रुतिः पठ्यते. एतच्च "विद्यैवतु निर्धारणाद्" (ब्रह्मसू.3।3।47) इत्यत्र निरूपितम्.

अपरञ्च, "नात्मवित्...तरति शोकम् आत्मविद्"(छान्दो.उप.7।1। 3) इति नारदवाक्यानुवादयोः 'आत्म'पदम् उत्तमप्रश्नात्मकेन लिङ्गेन पुरुषोत्तमपरम् इति ज्ञायते. सहि सर्वेभ्यः उत्तमो अतो 'ब्रह्म' इति उपास्यत्वेन सनत्कुमारोक्तप्रतिरूपं ततः "ततो भूयो अस्ति" इति अपृच्छत्. अन्ते सर्वाधिकत्वेन सुखात्मकत्वेन भूमानं श्रुत्वा तथा न अपृच्छत्, किन्तु तत्प्राप्त्यर्थम् अत्यार्त्या "कस्मिन् प्रतिष्ठित" (छान्दो.उप.7।24।1) इति अपृच्छत्. तदा सर्वात्मभाववत्स्वेव प्रतिष्ठित इति आशयेन सर्वात्मभावलिङ्गात्मकं भावं "सएव अधस्ताद्" (छान्दो.उप.7।25।25) इत्यादिना उक्तवान्॥49॥

ननु एतया श्रुत्या न सर्वात्मभावलिङ्गात्मको भावः उच्यते, किन्तु व्यापकत्वेन सर्वरूपत्वेन स्वभिन्नाधिकरणाभावाद् अन्यत्र अप्रतिष्ठितत्वमेव उच्यते इत्यतः उत्तरं पठति.

अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम्॥50॥

भूमस्वरूपं श्रुत्वा "स भगवः कस्मिन् प्रतिष्ठित?" (छान्दो.उप.7। 24।1) इति प्रश्ने "स्वे महिम्नि" (तत्रैव) इति उत्तरम्. तदर्थस्तु स्वीयत्वेन वृते भक्ते यो 'महिम'रूपः सर्वात्मभावः तस्मिन् इति. स्वरूपात्मके महिम्नि इति वा, भगवदात्मकत्वात् सर्वात्मभावस्य. तदितरस्य साक्षात्पुरुषोत्तमाप्रापकत्वाद् अस्यैव तत्प्रापकत्वात् परमकाष्ठापन्नमहित्वरूपो अयमेव भावः इति 'महिम'शब्देन उच्यते. सतु विप्रयोगभावोदये सत्येव सम्यग् ज्ञातो भवति व्यभिचारिभावैः. तेतु अनियतस्वभावाः इति ज्ञापयितुं त्रिविधाः. "सएव अधस्ताद्"(छान्दो.उप.7। 25।1) इत्यादिना "आत्मैव इदं सर्वम्" (तत्रैव) इत्यन्तेन निरूप्य, भूमप्रतिष्ठा-धिकरणप्रश्ने*, यद् उत्तरितं "स्वे महिम्नि"(तत्रैव7।24।1) इति, तमेव अनु-बध्नाति, "स वा एष"(तत्रैव 7।25।2) इत्यनेन, 'तत्'शब्दस्य पूर्वपरामर्शि-त्वात्. एवं सति त्वदुक्तम् अन्यत्र अप्रतिष्ठितत्वं चेद् इह प्रतिपाद्यं स्यात्, तदा उक्तरीत्या अनुबन्धं न कुर्याद्, अहङ्कारादेशादिकं च न कुर्याद्, उक्तप्रश्नोत्तरं स्वान्यवस्त्वभावाद् न क्वापि इत्येव वदेत्. तस्माद् अस्मदुक्तएव मार्गो अनुसर्तव्यः. 'आदि'पदात् त्रिविधा ये भावाः उक्ताः, तेषामपि स्वरूपम् "एवं पश्यन् एवं मन्वान एवं विजानन्" (तत्रैव 7।25।2) इति क्रमेण यद् निरूपितं तद् उच्यते. पूर्वं हि अतिविगाढभावेन तदितरास्फूर्त्या तमेव सर्वत्र पश्यति. एतदेव उक्तम् "एवं पश्यन्" इत्यनेन. ततः किञ्चिद् बाह्यानुसन्धाने अहङ्कारादेशो भवति सतु अहमेव सर्वतः स्वकृतिसामर्थ्येन तं प्रकटीकरिष्ये इति मनुते. करोति च तथा. अतएव अन्वेषणगुणगाने कृते ताभिः. एतदेव उक्तम् "एवं मन्वानः" इत्यनेन. ततो निरुपधिस्नेहविषयः पुरुषोत्तमः 'आत्म' शब्देन उच्यतइति तदादेशो भवति. तदा पूर्वकृतस्वसाधनवैफल्यज्ञानेन अतिदैन्ययुक्तसहजस्नेहजविविधभाववान् भवति. तद् एतत् उक्तम् "एवं विजानन्" इत्यनेन. अतएव उपसर्गः उक्तः. ततो अतिदैन्येन आविर्भावे सति या अवस्थाः ता निरूपिता 'आत्मरतिः' इत्यादिना. अत्र 'आत्म'शब्दाः पुरुषोत्तमवाचका ज्ञेयाः. अन्यथा औपचारिकत्वं स्यात्. मुख्ये सम्भवति तस्य अयुक्तत्वात्. ननु सर्वात्मभावस्यापि मुक्तौ पर्यवसानम्, उत न? इति संशयनिरासाय दृष्टान्तम् आह प्रज्ञान्तरपृथक्त्ववद् इति. मुमुक्षुभक्तस्य

स्वेष्टदातृत्वेन भगवद्विषयिणी या प्रज्ञा, सा सर्वात्मभाववद् भक्तप्रज्ञातः प्रज्ञान्तरम् इति उच्यते. तच्च कर्मज्ञानतदितरभक्तप्रज्ञाभ्यः पार्थक्येन तदिष्टमेव साधयति यथा, तथा सर्वात्मभाववतो भक्तस्य यत्प्रकारिका भगवद्विषयिणी प्रज्ञा, तमेव प्रकारं सः भावः साधयति, न अन्यमिति न मुक्तौ पर्यवसानम् इति अर्थः. अत्र व्यासः स्वानुभवं प्रमाणत्वेन आह दृष्टश्च इति. उक्तभाववतो भक्तस्य प्रभुस्वरूप-दर्शनाद्यरिक्तफलाभावो अस्माभिरेव दृष्टः इति अर्थः. एतादृशाः अनेके दृष्टाइति न एकस्य नाम गृहीतम्. अत्र शब्दमपि प्रमाणम् आह तदुक्तम् इति. भगवता इति शेषः. श्रीभागवते दुर्वाससं प्रति "अहं भक्तपराधीनः" (भाग.पुरा.9।4।63) इति उपक्रम्य "वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः

सत्पतिं यथा" (तत्रैव 9।4।66) इति. यो हि यद्वशीकृतः स तदिच्छानुरूपमेव करोति, अतो न सायुज्यादिदानं किन्तु भजनानन्ददानमेव. तेषां मुक्त्यनिच्छातु
"मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयं,
नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत् कालविप्लुतं,
स्वर्गापवर्गनरकेष्वपि तुल्यार्थ-दर्शिनः,
सालोक्य-सार्ष्टि-सामीप्य-सारूप्यैकत्वमप्युत,
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः"
(भाग.पुरा.9।4।68-69) इत्यादिवाक्यसहस्रैः निर्णीयते॥50॥
न सामान्यादपि उपलब्धेः मृत्युवन्न हि लोकापत्तिः॥51॥

नन "नान्यत् पश्यति" (छान्दो.उप.7।24।1) इत्यारभ्य सर्वस्य प्रपाठकस्य सर्वात्मभावनिरूपकत्वोक्तिः अनुपपन्ना. अतएव 'आत्म'पदानां पुरुषोत्तमपरत्वोक्तिश्च. यतः तस्य मुक्तावपि कामाभावः प्रतिपाद्यते. अत्रतु तस्य "सर्वेषु लोकेषु कामचारो भवति"(छान्दो.उप.7।25।2) इति श्रुतिः पठ्यते. एवं सति न तन्निरूपणम् अत्र इति वा वाच्यं, तद्भाववतोऽपि अन्यकामवत्वम् इति वा. द्वितीयस्य उक्तप्रमाणपराहतत्वेन आद्यपक्षएव आश्रयणीयः इति पूर्वपक्षं निरस्यति न इति. तत्र हेतुम् आह सामान्यादपि उपलब्धेः इति. तत्समान-धर्मयोगादपि तत्प्रयोगः श्रुतौ उपलभ्यते अनेकशो यतः प्रकृतेऽपि विविधानां
लोकानां विविधसुखप्रधानत्वाद् भगवत्सम्बन्धिषु सर्वेषु सुखेषु कामचारो भवति इति श्रुतेः अर्थो ज्ञेयः. ननु यथाश्रुतएव अर्थो अस्तु, तत्र आह नहि लोकापत्तिः इति. सर्वात्मभाववतः इति. प्रकरणाद् "नान्यत् पश्यति" इत्यादिधर्मविशिष्टस्य आत्मनः प्राणादिसर्ववतो लोकसम्बन्धो युक्तिसहोऽपि न इति ज्ञापनाय हि शब्दः. किञ्च एतदग्रे, "न पश्यो मृत्युं पश्यति" (तत्रैव 7।26।2) इति श्रुत्या यथा मृत्युनिषेधः क्रियते, तथा "आत्मतएव इदं सर्वम्" (तत्रैव 7।26।2) इति श्रुत्या 'एव'कारेण आत्मातिरिक्तव्यवच्छेदः क्रियतइति मृत्युवल्लोकोऽपि न सम्बध्यते इति आह मृत्युवद् इति. तत्र रोगादीनामपि दर्शननिषेधे सत्यपि मृत्योरेव यद् निदर्शनम् उक्तं, तेन भक्तानां लोकान्तरसम्बन्धः तत्तुल्यः इति ज्ञाप्यते. अतएव "नोत दुःखम्" (तत्रैव 7।26।2) इति दुःखसामान्यनिषेधो अग्रे कृतः॥51॥
परेण च शब्दस्य ताद्विध्यं भूयस्त्वात् त्वनुबन्धः॥52॥

अत्र हेत्वन्तरम् आह अस्मिन्नेव श्लोके "सर्वम् आप्नोति सर्वशः" (छान्दो.उप.7।26।2) इति परेण पादेन शब्दस्य श्रुतिवाक्यस्य "आत्मतएव इदं सर्वम्" (तत्रैव 7।26।2) इति यत् पूर्वं श्रुतिवाक्यं तद्विधतैव प्रतीयतेइति न लोकसम्बन्धो वक्तुं शक्यः इति अर्थः. ननु "आत्मतएव इदं सर्वम्"(तत्रैव) इतिवाक्येनैव एतदर्थलाभे पुनः तदुक्तिः न उचिता इति आशङ्कायां तत्र हेतुम् आह. तुशब्दः शङ्कानिरासे. भूयस्त्वाद् हेतोः. उक्ते अर्थे हेतूनां बाहुल्ये तद्दाढर्यं भवति इति आशयेन उक्तार्थस्यैव श्लोकेन अनुबन्धः कृतः इति

अर्थः. अथवा ‘भूयः’पदम् आधिक्यार्थकम्. तथाच स्वकृतसाधनसाधितफलापेक्षया स्वयम् उद्यम्य भगवता साधितफले निरवधिः उत्कर्षः इति ज्ञापनाय पुनः श्लोकेन तथा इति अर्थः॥ 52॥

एक आत्मनः शरीरे भावात्॥53॥

उक्ते अर्थे श्रुत्यन्तरसम्मतिमपि आह एके शाखिनः तैत्तिरीयाः, शरीरे भक्तशरीरे हृदयाकाशे इति यावत्, तत्र आत्मनो भगवतो भावाद् आविर्भावात् तेन सह सर्वकामोपभोगं वदन्तीं श्रुतिं पठन्ति “सत्यं ज्ञानम् अनन्तं ब्रह्म, यो वेद निहितं गुहायां परमे व्योमन्, सो अश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता” (तैत्ति.उप.2।1) इति. अत्र उपक्रमे “ब्रह्मविद् आप्नोति परम्” इतिश्रुतिः अक्षरब्रह्मविदः परब्रह्मप्राप्तिं सामान्यतः उक्त्वा, विशेषतः कथनार्थं “तद् एषा अभ्युक्ता” (तत्रैव) इति वाक्यं तद् ब्रह्मप्रतिपाद्यत्वेन अभिमुखीकृत्य एषा वक्ष्यमाणा ऋक् परब्रह्मविद्भिः उक्ता इति 1उक्त्वा एवम् उक्तवती “सत्यं ज्ञानम्” इति. परब्रह्मस्वरूपम् अनुभवैकवेद्यं, न 2शब्दादिभिः वेद्यम् इति ज्ञापनाय स्वयं तत्तत्त्वप्रतिपादिकापि अन्यमुखेन उक्तवती. अत्र ब्रह्मणा सह सर्वकामोपभोगः उक्तः इति एतदेकवाक्यतायै “सर्वेषु लोकेषु कामचारो भवति” (छान्दो.उप.7।25।2) इति श्रुतेरपि उक्तएव अर्थो मन्तव्यः॥53॥

इति तृतीयाध्याये तृतीयपादे सप्तदशं लिङ्गभूयस्त्वाधिकरणम्॥17॥

## व्यतिरेकः तद्भावाभावित्वाद् न तूपलब्धिवत्॥54॥(3।3।18)

ननु “ब्रह्मविदाप्नोति परम्”(तैत्ति.उप.2।1) इति श्रुत्या अक्षरब्रह्म-विदः परब्रह्मप्राप्तिः उच्यते. तत्र इतरसाधनसापेक्षं ब्रह्मज्ञानं परं प्रापयति, उत तन्निरपेक्षम्? इति भवति संशयः. अत्र श्रुतौ तन्मात्रोक्तेः इतरनिरपेक्षमेव तत् तथा इति पूर्वः पक्षः. सिद्धान्तस्तु, एवं सति ज्ञानमार्गीयाणामपि परप्राप्तिः स्यात्. सातु अनेकप्रमाणबाधिता इति पूर्वम् अवोचाम. किञ्च, ज्ञानशेषभूत-ब्रह्मापेक्षया फलात्मकस्य परस्य मुख्यत्वात् “तद् एषा अभ्युक्ता” (तैत्ति.उप. 2।1) इति श्रुतिः तदेव प्रतिपाद्यत्वेन अभिमुखीकृत्य ‘ऋग् उक्ता’ इति आह. तेन तत्र ब्रह्म-पदे पुरुषोत्तमपरे ज्ञायेते. तथाच गुहायां यदि आविर्भूतं 1परमं व्योमः पुरुषोत्तमगृहात्मकम् अक्षरात्मकं व्यापिवैकुण्ठं भवति, तदा तत्र भगवान् आविर्भवतीति तत्प्राप्तिः भवति इति उच्यते “यो वेद निहितं गुहायां परमे व्योमन्”(तत्रैव2।1) इत्यनेन. तथाच, ज्ञानिनां गुहासु परमव्योम्नो व्यतिरेक-एव. तत्र हेतुः, तद्भावाभावित्वाद् इति. “यमेवैष वृणुते” (कठोप.2।22) इति श्रुतेः वरणाभावे भगवद्भावस्य असम्भवाद्, ज्ञानिनां तथावरणाभावाद् भगवद् -विषयको भावो न भावीति तथा इति अर्थः. ननु ज्ञानविषयत्ववद् आविर्भावोऽपि अस्तु, किञ्च, तदतिरिक्तम् आविर्भावमपि न पश्यामः इति आशङ्कायाम् आह न तूपलब्धिवद् इति. उपलब्धिः ज्ञानं, तद्वद् गुहायाम् आविर्भावो न भवति इति अर्थः. यस्मै भक्ताय यल्लीलाविशिष्टं स्वस्वरूपम् अनुभावयिता प्रभुः भवति,

तद्‌गुहायां तल्लीलाश्रयभूतम् अक्षरस्वरूपं वैकुण्ठलोकवद् आविर्भायतीति न उक्तशङ्कालेशोऽपि. यत्र पुरुषोत्तमस्य चाक्षुषत्वं, तत्र ततो अधःकक्षस्य तस्य तथात्वे का शङ्का नाम एतद् 2उपपादितं पूर्वं, विद्वन्मण्डने च.

ननु ज्ञानिज्ञानविषयभक्तगुहाविर्भूताक्षरयोः भेदो अस्ति न वा? न आद्यः, मानाभावाद्, एकत्वेनैव सर्वत्र उक्तेः. न द्वितीयः. निरवयवस्य क्वचिद् लोकरूप-त्वातद्रूपत्वाभ्याम् एकत्वानुपपत्तेः इति चेद्, मैवम्. लोकरूपत्वस्य पश्चाद्भावित्वे हि इयम् अनुपपत्तिः, नतु एवं, किन्तु अक्षरस्वरूपमेव तथा इति श्रुतिः आह. "अम्भस्यपारे भुवनस्य मध्ये" (तैत्ति.आर.10।1।1) इत्युपक्रम्य "तदेव भूतं तदु भाव्यमा इदं तदक्षरे परमे व्योमन्"(तत्रैव 10।10।1). एतदग्रे च "यमन्तःसमुद्रे कवयोऽवयन्ति यदक्षरे परमे प्रजाः" (तत्रैव 10।1।1) इत्यादिरूपा. स्मृतिरपि

"परस्तस्मात्तु भावो अन्यो अव्यक्तो व्यक्तात् सनातनः,
यः सः सर्वेषु भूतेषु नश्यत्सु न विनश्यति,
अव्यक्तो अक्षर इति उक्तः तम् आहुः परमां गतिम्,
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम"

(भग.गीता 8।20-21) इत्यादितु गीतासु. श्रीभागवतेऽपि

"दर्शयामास लोकं स्वं गोपानां तमसः परम्,
सत्यं ज्ञानम् अनन्तं यद् ब्रह्म ज्योतिः सनातनम्,
यद् हि पश्यन्ति मुनयो गुणापाये समाहिता"

(भाग.पुरा.10।25।14/15) इति दशमे. द्वितीये च

"तस्मै स्वलोकं भगवान् समाहितः सन्दर्शयामास"(भाग.पुरा.2।9।9)

इत्युपक्रम्य, कालत्रिगुण3मायादिसम्बन्धराहित्यम् उक्त्वा, भगवत्-पार्षदान् उक्त्वा, विमानप्रमदा उक्त्वा, श्रीः उक्ता. तथाच श्रुतिस्मृत्येकवाक्यतायां तादृक् स्वरूपमेव अक्षरम् इति निर्णयो भवति. एवं सति सच्चिदानन्दत्व-देशकालापरिच्छेदस्वयंप्रकाशत्वगुणातीतत्वादिधर्मवत्वेनैव ज्ञानिनाम् अक्षर-विज्ञानं, भक्तानामेव पुरुषोत्तमाधिष्ठानत्वेन तथा इति ज्ञेयम्. "मल्लानाम् अशनिः" (भाग.पुरा.10। 43।17) इति श्लोकोक्तरीत्या पुरुषोत्तमस्येव. प्रभुणा ये यथा विचारिताः सन्ति, ते तथा भवन्ति इति तद्विचारएव सर्वेषाम् अधिकाररूपः इति "कृतप्रयत्नापेक्षस्तु" (ब्रह्मसू.2।3। 42) इत्यत्र निर्णीतम्॥54॥

अस्मिन् अर्थे कैमुतिकन्यायकथनार्थं निदर्शनत्वेन उत्तरं पठति.

अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्॥55॥

यागे तत्तद् ऋत्विग् नियतकर्तव्यानि अन्वाधानादीनि अङ्गानि. तत्र अवबद्धाः सर्वएव ऋत्विजो यजमानेन. 'अवबन्धनं' नाम "अध्वर्युं त्वां वृणे", "होतारं त्वां वृणे", "उद्‌गातारं त्वां वृणे" इत्यादिरूपं वरणमेव. अन्यथा सर्वकर्मविदुषां तत्कृतिपटूनाम् एकत्र

अधिकारः, न अन्यत्र इति नियमो न स्यात्. तस्य-तस्य तथा वरणेतु यजमानेच्छैव हेतुः. ते च तदा न सर्वासु शाखासु विहितानि अङ्गानि कर्तुं सर्वेऽपि शक्ताः, किन्तु यजमानवरणनियमिताएव तथा. तत्र हेतुम् आह हि यतः कारणात् प्रतिवेदं नियमितानि अङ्गानि, "हौत्रम् ऋचा, आध्वर्यवादि यजुषा, उद्‌गात्रं साम्ना" (आप.परिभा.1।18-20)इति. तथाच अलौकिके वैदिके कर्मणि जीवेच्छापि नियामिका भवति यत्र, तत्र किमु वाच्यं प्रतिरोमकूपं सावकाशम् अमितब्रह्माण्डस्थितिम् अतः तदीशितुः इच्छैव नियामिका तत्तत्साधनफलसम्पत्तौ इति॥55॥

मन्त्रादिवद् वा अविरोधः॥56॥

ननु पूर्वं कर्मज्ञाननिष्ठानामपि पुंसाम् अग्रे भक्तिमार्गीयत्वं यत्र भवति, तत्र तथैव भगवद्वरणम् इति हि सिद्धान्तः. ऋत्विजस्तु एकस्मिन् यागे एकत्र वृतस्य न अपरत्रापि तथेति विरुद्धो दृष्टान्तः इति अरुच्या निदर्शनान्तरम् आह. यथा एकएव कश्चिद् मन्त्रो बहुषु कर्मसु सम्बध्यते, कश्चिद् द्वयोः, कश्चित् एकत्रैव, तथैव विधानात्, तथा अत्रापि इति अर्थः. आदिपदात् कर्म उच्यते. यत्र काम्येनैव नित्यकर्मनिर्वाहः, तत्र कामितार्थसाधकत्वे प्रत्यवायपरिहारेऽपि एकमेव तदुपयुज्यते. यथाच सर्वतोमुखे 1अनेकहोतृप्रवरे अध्वर्युप्रवरे च गृह्यमाणे "देवाः पितरः" (तैत्ति.ब्राह्म.3।7।5।4) इत्यादिना यजमानकर्तृकानुमन्त्रणम् एकमेव सर्वत्र सम्बध्यते, तथैव विधेः, तथा अत्रापि तावद्विधं यद् एकमेव वरणं, तेन तत्तन्निष्ठानन्तरं भक्तिनिष्ठेति न दृष्टान्तविरोधः इति अर्थः.

अथवा. ॐ इत्युदाहृत्यैव मन्त्राणाम् उच्चारणाद् मन्त्रादिः 'ॐ'कारः. स यथा ब्रह्मात्मकत्वेन एकएव सर्वमन्त्रेषु सम्बध्यते, तथा वरणमपीति तथा इति अर्थः. यद्यपि इतरनिष्ठानन्तरभूतभक्तिनिष्ठावतोऽपि वरणं तथाभूतम् एकमेवेति न उक्तदोषः, तथापि उत्कृष्टमार्गे वृतस्य नीचकक्षापादनम् अनुचितम् इति मत्वा पक्षान्तरम् उक्तम्. वस्तुतस्तु साधनमर्यादया यत्र भक्तिः दित्सिता, तत्र तथेति न अनुपपत्तिः काचित्॥56॥

इति तृतीयाध्याये तृतीयपादे अष्टादशं व्यतिरेकाधिकरणम्॥18॥

## भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति॥57॥ (3।3।19)

ननु सुखस्वरूपजिज्ञासायां "यो वै भूमा तत् सुखम्" (छान्दो.उप. 7।23।1) इति उक्तं भूमस्वरूपजिज्ञासायां "यत्र नान्यत् पश्यति" (तत्रैव 7।24।1) इत्यादिना तद् यन्निरूपितं तत् सर्वात्मभावस्वरूपम् इति यद् उक्तं, तद् न उपपद्यते. भूम्नो हि सुखरूपता उच्यते. सर्वात्मभावेतु विरहभावे दुःसह-दुःखानुभवः श्रूयते. तेन मोक्षसुखमेव "यो वै भूमा" इत्यादिना उच्यते. "यो वै भूमा तद् अमृतम्" (छान्दो.उप.7।24।1) इतिवाक्याच्च. अग्रे च, "स वा एष एवं पश्यन्" (छान्दो.उप.7।25।2) इत्यादिः उक्त्वा, "तस्य सर्वेषु लोकेषु कामचारो भवति"(छान्दो.उप.7।25।2) इति फलम् उच्यते. तच्च मोक्षानन्तरम् असम्भवि, अतः सः भावो मोक्षो वा अत्र उच्यते इति संशयः. तत्र कामचारोक्तेः मुक्तिपूर्वदशायां

तन्माहात्म्यनिरूपणार्थत्वाद् 'अमृत'शब्दाच्च मुक्तिरेव 'भूम'पदेन उच्यते इति पूर्वः पक्षः. तत्र 'भूम'शब्देन सः भावएव उच्यते इति सिद्धान्तः. तत्र दुःखदर्शनानुपपत्या सर्वाधिकत्वलक्षणं भूमत्वम् अनुपपन्नम् इति शङ्कां परिहरति. भूम्नः सर्वात्मभावस्य ज्यायस्त्वं सर्वस्माद् मन्तव्यम्. तत्र उक्तानुपपत्तिपरिहार्थं दृष्टान्तम् आह क्रतुवद् इति. दर्शपूर्णमासप्रकरणे तैत्तिरीयके पठ्यते "परमेष्ठिनो वा एष यज्ञो अग्र आसीत् तेन स परमां काष्ठाम् अगच्छद्" (तैत्ति.संहि.1।6।9) इत्युपक्रम्य, "य एवं विद्वान् दर्शपूर्णमासौ यजते परमामेव काष्ठां गच्छति" (तत्रैव 1।6।9) इति. यथा व्रतादिदुःखा-त्मकत्वेऽपि परमकाष्ठालक्षणफलगमकत्वेन दर्शपूर्णमासयोः सर्वक्रतुभ्यो अधिकत्वं वक्तुम् "अग्रे आसीद्" इति स्तूयते, तथा दुःखहेतुत्वेऽपि अनन्यलभ्य-साक्षात्पुरुषोत्तमानन्द-प्राप्तिहेतुत्वेन सुखरूपत्वम् उच्यतइति अन्येभ्यः सर्वेभ्यो ज्यायस्त्वं मन्तव्यम् इति अर्थः. अत्र उपपत्तिम् आह. तथाहि दर्शयति. श्रुतिस्तु "सएव अधस्ताद्" (छान्दो.उप.7।25।1) इत्यादि उक्त्वा "अथ अहङ्कारादेशः" (तत्रैव) इत्यादि उक्त्वा, "अथ आत्मादेशः" (तत्रैव) इत्यादि उक्तवती. अग्रे च एतादृशस्य "आत्मतएव" (तत्रैव 7।26।1) प्राणा-शास्मरादिसर्वम् इति च दर्शयति. एतत् सर्वात्मभाववत्येव सर्वम् उपपद्यते, नतु मुक्तस्य, वृत्तिभेदाभावात् प्राणाद्यभावाच्च. जीवन्मुक्तिदशायां प्राचीनानामेव सत्त्वात्, "आत्मतः प्राणाः" (तत्रैव 7।26।1) इत्यादि न वदेत्.

यद्वा. ननु लोकेऽपि शृङ्गाररसभाववति पुंसि नार्यां च त्वदुक्त-भावसम्बन्धि-व्यभिचारिभावाः श्रूयन्ते. "सैव सर्वत्र, स एव सर्वत्र" इति. एवं सति लौकिकसधर्मवत्त्वाद् न त्वदुक्तभावस्य अलौकिकज्ञानादिभ्यः आधिक्यं वक्तुं शक्यम्, अलौकिकविषयत्वाद् लौकिकत्वमपि न तथा इति भवति संशयः. तत्र मनुजत्व-रिपुत्वादि-ज्ञानानामिव कामादिभावेन स्नेहभावस्यापि सम्भवाद् न अस्य अलौकिकत्वम् इति पूर्वः पक्षः.

सिद्धान्तस्तु अस्य भावस्य लौकिकेभ्यो ज्यायस्त्वं मन्तव्यम्. ननु उक्तं लोकसाधारण्यं बाधकम् इति शङ्कानिरासाय निदर्शनम् आह क्रतुवद् इति. यथा दर्शादिषु दोहनाधिश्रयणातञ्चनव्रीह्यवघातादिपुरोडाशभक्षणादीनां लौकिकक्रियातुल्यत्वेन दर्शनेऽपि न लौकिकत्वं लौकिकप्रमाणाप्राप्तत्वाद् अलौकिकतत्प्राप्तत्वात्, तथोक्तप्रमाणरूपवरणलभ्यत्वेन श्रुत्युक्तत्वाद् न लौकिकत्वम् अस्य भावस्य इति दिक्.

वस्तुतस्तु ग्रामसिंहस्य सिंहस्वरूपत्वेऽपि न ताद्रूप्यं वक्तुं शक्यं तथा लौकिकपुंसि नार्यां वा तदाभासो रसशास्त्रे निरूप्यते, तद्दृष्टान्तेन भगवद्भाववद् भक्तरीतिभावनार्थं, नतु ऋषीणां लौकिके तात्पर्यं भवितुम् अर्हति. अत्र उपपत्तिम् आह तथाहि इत्यादि. पूर्वोक्तभाववतः आत्मतः प्राणादिकं सर्वं दर्शयति श्रुतिः "तस्य ह वा एतस्यैवं पश्यतः" (छान्दो.उप.7।26।1) इत्यादिना. इतः पूर्वमपि "स वा एष एवं पश्यन्" (तत्रैव 7।25।2) इति उपक्रम्य, "आत्मरतिः आत्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति, सर्वेषु लोकेषु कामचारो भवति" (तत्रैव 7।25।2)इति श्रुतिश्च. न हि लोके एवं

सम्भवति. ‘आत्म’पदानां भगवद्वाचकत्वाद् इति सर्वोत्तमविषयकभावस्यैव तथात्वं युक्तम् इति च उपपत्तिः हि शब्देन सूच्यते॥57॥19॥
इति तृतीयाध्याये तृतीयपादे एकोनविंशं भूम्नः इति अधिकरणम्॥19॥

## नाना शब्दादिभेदात्॥58॥ (3।3।20)

पूर्वाधिकरणैः सर्वात्मभावस्वरूपादिनिर्णयं कृतवान्. अथ मत्स्यादि-रूपाणां भगवदवतारत्वम् अविशिष्टमिति सर्वेषां समस्य उपासना कार्या, उत पार्थक्येन इति विचारयति. अत्र उपास्याभेदेऽपि रूपभेदाद् एकत्र उपासकस्य अन्यत्र अनुपासनलक्षणावज्ञासम्भवाद् अस्यापि असिद्धिसम्भवादपि समस्यैव सा कार्या, इति प्राप्ते, सिद्धान्तम् आह सर्वेषु अवतारेषु नानाएव उपासना कार्या. तत्र हेतुः शब्दादिभेदाद् इति. तत्-तत्स्वरूपवाचकशब्दानां मन्त्राणां च ‘आदि’पदाद् आकारकर्मणां च भेदाद् इति अर्थः. एतेनैव मिथोविरुद्धानाम् आकारकर्मणाम् एकत्र भावनस्य अशक्यत्वम् अयुक्तत्वं च इति भावः सूचितः॥58॥
इति तृतीयाध्याये तृतीयपादे विंशं नानाशब्दादिभेदाद् इति अधिकरणम्॥20॥

## विकल्पो अविशिष्टफलत्वात्॥59॥ (3।3।21)

पार्थक्येन उपासनानि कर्तव्यानि इति स्थिते विचार्यते. किम् अग्निहोत्र-दर्शपूर्णमासादिवद् एषां समुच्चयः, उत फलविकल्पः इति. तत्र विधि-फलयोः समानत्वात् समुच्चयः इति प्राप्ते, निर्णयम् आह. उपासनानां विकल्पएव. तत्र हेतुः अवशिष्टफलत्वात्. मुक्तिफलकत्वं हि सर्वेषाम् उपासनानाम् अविशिष्टम्. एवं सति एकेनैव तत्सिद्धौ अपरस्य अप्रयोजकत्वाद् अग्निहोत्रादिवद् नित्यताबोधकश्रुत्यभावात् तदर्थिनो विकल्पएव॥59॥
इति तृतीयाध्याये तृतीयपादे एकविंशं विकल्पाधिकरणम्॥21॥
काम्यास्तु यथाकामं समुच्चीयेरन् न वा

## पूर्वहेत्वभावात्॥60॥ (3।3।22)

येषु तु उपासनेषु भिन्नानि-भिन्नानि फलानि उच्यन्ते, तत्रतु अनेक-फलार्थिनः तत्तत्फलकोपासनानि समुच्चीयेरन् अविशिष्टफलत्वाभावात्. यत्रतु एकस्यैव उपासनस्य स्वकामितानेकफलत्वं श्रूयते, तत्र तथैव चेद् उपासनं करोति, तदा न समुच्चीयेरन् अपि. स्वकामितेषु एकतरस्य तदन्यफल-वैशिष्ट्येन अविशिष्टफलत्वाभावाद् इति पूर्वहेत्वभावाद् इति श्लिष्टप्रयोगा-भिप्रायेण उक्तम् इति ज्ञेयम्. अथवा कामैक्ये नियतफलकानि तानि न समुच्चीयेरन्. अत्र हेतुः स्पष्टः॥60॥॥
इति तृतीयाध्याये तृतीयपादे द्वाविंशम् काम्याधिकरणम्॥22॥

## अङ्गेषु यथाश्रयभावः॥61॥ (3।3।23)

प्रधानेषु निर्णयम् उक्त्वा अङ्गेषु तम् आह. एकार्थसाधकानाम् उपासनानां भेदेन अङ्गभेदेऽपि एकतरोपासने फलैक्याद् अङ्गानि तत्र समुच्चीयेरन् न वा इति संशये, निर्णयम् आह. उपासनाङ्गानां तदेव आश्रयः. तथाच यद् अङ्गं यद् उपासनाश्रितं, तत्रैव 1अस्य भावः इति अर्थः॥61॥

अत्र हेतुम् आह.

शिष्टेश्च॥62॥

तत्तदुपासनं तत्तदङ्गविशिष्टमेव वेदे शिष्यतेइति तथा इति अर्थः. 'च'काराद् अतिरिक्तकरणे प्रायश्चित्तोक्तिरपि बाधिका इति सूच्यते॥62॥

इति तृतीयाध्याये तृतीयपादे त्रयोविंशम् अङ्गेषु यथाश्रयभावाधिकरणम्॥23॥

## समाहारात्॥63॥ (3।3।24)

कर्ममार्गीयोपासने निर्णयम् उक्त्वा ज्ञानमार्गीयोपासने तम् आह. अथर्वोपनिषत्सु नृसिंहोपासनादिषु मत्स्यकूर्मादिरूपत्वेनापि स्तुतिः श्रूयते. श्रीभागवते च "नमस्ते रघुवर्याय"(भाग.पुरा.10।40।20) इत्यादिरूपा स्तुतिः व्रजनाथे. एवं सति रूपभेदेऽपि भगवदवतारस्य अविशिष्टत्वाद् एकस्मिन् रूपे रूपान्तरसमाहारो दृश्यतेइति सर्वरूपत्वेन एकत्र उपासनमपि साधुः इति अर्थः॥63॥

गुणसाधारण्यश्रुतेश्च॥64॥

ऐश्वर्यवीर्यादिगुणानां सर्वेषु अवतारेषु साधारण्यं श्रूयते. तेन धर्मि-धर्माणाम् ऐक्यात् पूर्वोक्तं साधु इति अर्थः॥64॥

इति तृतीयाध्याये तृतीयपादे चतुर्विंशं समाहाराधिकरणम्॥24॥

## न वा तत्सहभावाश्रुतेः॥65॥ (3।3।25)

ननु एवम् उपासनं नित्यम् उत वैकल्पिकम् इति संशये उक्तरीत्या नित्यत्वे प्राप्ते, तन्निषेधम् आह न इति. किन्तु वा, विकल्पएव एवम् उपासन ऐच्छिकः, तत्र हेतुम् आह सहभावाश्रुतेः इति. नियमतः तेषां रूपाणां सहभावश्रवणं चेत् स्यात्, तदा स्यात् तथा उपासनस्य नित्यता, नतु एवम्. अतो विकल्पएव इति अर्थः॥65॥

दर्शनाच्च॥66॥

योऽपि रूपान्तरसमाहारपूर्वकम् उपास्ते सोऽपि एकं रूपम् उपास्यत्वेन मत्वा तत् तथा उपास्तेइति फलं तस्य एकस्यैव रूपस्य दर्शनं भवति, नतु सर्वेषाम्. इतोऽपि हेतोः विकल्पएव इति अर्थः. एतद्दृष्टान्तेन यस्मिन् रूपे यादृग्धर्मवत्वं श्रूयते, तादृग्धर्मविशिष्टमेव एकं रूपम् उपास्यम् इति व्यासहृदयम् इति ज्ञायते. उपासनानिर्णयान्ते दर्शनात्मकहेतूक्त्या सर्वोपासनानां भगवत्साक्षात्कारः फलम् इति ध्वन्यते. माहात्म्यज्ञापनार्थं परं सर्वावताररूपत्वं यथार्थमेव कैश्चिद् ज्ञाप्यते, यथार्थत्वात् तदपि अविरोधि इति ज्ञेयम्.

तृतीयाध्याये तृतीयपादे पञ्चविंशं न वा तत्सहभावाश्रुतेः इति अधिकरणम्॥25॥

इति श्रीवेदव्यासमतवर्ति-श्रीमद्वल्लभाचार्यविरचिते श्रीमद्ब्रह्मसूत्राणुभाष्ये तृतीयाध्यायस्य तृतीयः पादः समाप्तः॥3॥3॥

## *तृतीयो अध्यायः चतुर्थः पादः*

### पुरुषार्थो'अतः'शब्दाद् इति बादरायणः॥1॥ (3।4।1)

उपासनाभेदेऽपि उपास्याभेदात् शाखान्तरोक्तधर्माणामपि उसंहारः कर्तुम् उचितः इति पूर्वपादे निरूपितमिति तन्न्यायेन उत्तरकाण्डप्रतिपाद्यब्रह्म-फलकसर्वात्मभावेऽपि पूर्वकाण्डप्रतिपादितकर्मणाम् उपसंहारः प्राप्नोति न वा इति अधुना विचार्यते. विधिपक्षे तत्सहकृतस्य अस्य फलसाधकत्वम् इति सिध्यति. निषेधपक्षेतु केवलस्य इति. इममेव पक्षं सिद्धान्तत्वेन आह पुरुषार्थः इत्यादिना. सिद्धान्ते ज्ञाते न तत्र पूर्वपक्षसम्भवः इत्यादौ तमेव आह. अतः सर्वात्मभावादेव केवलात् पुरुषार्थः सिध्यति. कुतः? शब्दात्. श्रुतेः इति अर्थः. श्रुतिस्तु "नायमात्मा प्रवचनेन" (कठोप.2।22) इत्युपक्रम्य, "यमवैष वृणुते" (तत्रैव) इत्यादिका, "ब्रह्मविदाप्नोति परम्" (तैत्ति.उप.2।1) इत्यादिका, "तमेवं विद्वानमृत इह भवति" (नृसिं.पू.उप.1।6) इति, सनत्कुमार-नारदसंवादे "यत्र नान्यत् पश्यति" (छान्दो.उप.7।24।1) इत्याद्यात्मिका छान्दोग्यश्रुतिश्च. एतदादिश्रुतिषु पूर्वोक्तरीत्या केवलस्यैव भगवद्भावस्य फलसाधकत्वं श्रूयत इति तथा. अत्र "फलमत उपपत्तेः" (ब्रह्मसू.3।2।38) इत्यत्रेव उपपत्तिं हेतुत्वेन अनुक्त्वा, 'श्रुति'पदं च अनुक्त्वा, 'शब्द'पदं यद् उक्तवान्, तेन श्रुति-स्मृत्यात्मकः सर्वोऽपि प्रमाणशब्दो हेतुत्वेन व्यासाभिमतः इति ज्ञायते. तेन

"केवलेन हि भावेन गोप्यो गावः खगा मृगाः, ये अन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा, यन्न योगेन सांख्येन दान-व्रत-तपोऽध्वरैः, व्याख्या-स्वाध्याय-सन्न्यासैः प्राप्नुयाद् यत्नवानपि"
(भाग.पुरा.11।12।8/9)

इत्यादिरूपा स्मृतिरपि संगृह्यते. एतेन श्रुत्यादिप्रमाणवादिनाम् इदमेव अभिमतं, तद्विरुद्धवादिनाम् इतो अन्यदिति तेषाम् अप्रामाणिकत्वं ज्ञाप्यते. अतएव स्वनाम गृहीतम्. स्वस्य वेदव्यासकतृत्वेन तत्रैव यतो भरः.

अपरञ्च. वैदिकसिद्धान्ते भगवत्स्वरूपस्यैव स्वतन्त्रपुरुषार्थत्वात् प्राप्त-तत्स्वरूपाणां मुक्त्यनिच्छाकथनाद् "मुक्तोपसृप्यव्यपदेशाच्च"(ब्रह्मसू.1।3। 2) मुक्तेः अपरमपुरुषार्थत्वात् सा भवतु नाम अन्यैः साधनैः. वस्तुतः परमपुरुषार्थो यः उक्तरूपः, सतु सर्वात्मभावेनैव इति ज्ञापनाय 'फल'पदम् अनुक्त्वा 'पुरुषार्थ'पदम् उक्तम्. एवं सति अस्य

सूत्रस्य अर्थान्तरमपि व्यासाभिमतम् इति ज्ञायते. तथा सति अयं श्लिष्टः प्रयोगः. तथाहि पुरुषार्थो भगवानेव. कुतः? अतः शब्दात्. 'अतः'पदविशिष्टश्रुतिवाक्याद् इति अर्थः. तैत्तिरीयोपनिषत्सु पठ्यते "अतः परं न अन्यद् अणीयसं हि परात् परं यद् महतो महान्तं, यद् एकम् अव्यक्तम् अनन्तरूपं विश्वं पुराणं तमसः परस्ताद्" (महाना. उप.1।1) इति॥1॥

अथ अत्र प्रत्यवतिष्ठते.

शेषत्वात् पुरुषार्थवादो यथान्येषु इति जैमिनिः॥2।

विष्णोः इज्यत्वेन कर्मशेषत्वात् तत्स्वरूपज्ञानपूर्वको यागः फलाति-शयहेतुरिति तन्माहात्म्यम् उच्यते इति अर्थवादरूपं तत्. अत्र दृष्टान्तम् आह यथा अन्येषु इति. अन्येषु द्रव्यसंस्कारकर्मसु. "यस्य पर्णमयी 1जुहूर्भवति , न स पापं श्लोकं शृणोति"(तैत्ति.संहि.3।5।2।7), "2यदङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते यत् प्रयाजानुयाजा इज्यन्ते, वर्म वा एतद् यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्याभिभूत्या"(तैत्ति.संहि.2।6।1।5) इत्येवंजातीयका फलश्रुतिः अर्थवादः तद्वद् इति अर्थः॥2॥

ननु "तमेव विदित्वा मुनिर्भवति एतमेव प्रव्राजिनो लोकम् ईप्सन्तः प्रव्रजन्ति"(बृहदा.उप.4।4।22). एतदग्रे च "ते ह स्म पुत्रैषणायाश्च वित्तैष-णायाश्च लोकैषणायाश्च व्युत्थाय अथ भिक्षाचर्यं चरन्ति"(तत्रैव 4।4।22) इति श्रुतिः भगवज्ज्ञानवतः सर्वत्यागं वदतीति न त्वदुक्तं साधीयः इत्यतः उत्तरं पठति.

आचारदर्शनात्॥3॥

ब्रह्मविदामपि वसिष्ठादीनाम् अग्निहोत्रादिकरणं जैमिनिः पश्यति इति 1तदाचारं प्रामाणिकं च मनुते इति तन्मतम् अनुवदन् इममपि अनूक्तवान् व्यासः. ब्रह्मविदां त्यागावश्यकत्वे गार्हस्थ्यम् एतेषां न स्याद् इति भावः. उक्तश्रुतिस्तु कर्मणि अशक्तानां तेषां त्यागम् अनुवदति. "लोकैषणायाश्च व्युत्थाय" (बृहदा. उप.3।5।1) इति श्रुतेः लोकसंग्रहार्थं तत्करणम् इति न वक्तुं शक्यम् ॥3॥

तच्छ्रुतेः॥4॥

ब्रह्मविदः कर्माचारनिरूपकश्रुतेः इति अर्थः. साच "जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेज"(बृहदा.उप.3।1।1) इत्यादिरूपा. तथाच ज्ञानेनैव अर्थ-सिद्धिः चेत् स्यात्, तदा तद्वतः आयाससाध्ये कर्मणि प्रवृत्तिः न स्याद् इति भावः ॥4॥

समन्वारम्भणात्॥5॥

"तं विद्याकर्मणी समन्वारभेते" (बृहदा.उप.4।4।2) इति श्रुतिः फलारम्भे विद्या-कर्मणोः साहित्यं दर्शयतीति न स्वातन्त्र्यं विद्यायाम्॥5॥

तद्वतो विधानात्॥6॥

"ब्रह्मिष्ठो ब्रह्मा दर्शपूर्णमासयोः तं वृणीत" (आप.श्रौत. सू.3।18। 1) इति कल्पश्रुत्या ब्रह्मविदो ब्रह्मत्वेन वरणं विधीयतइति ब्रह्मज्ञानस्य आर्त्विज्याधिकारसम्पादकत्वात् कर्मशेषत्वमेव इति अर्थः॥6॥

ननु “यदहरेव विरजेत्, तदहरेव प्रव्रजेद्, गृहाद् वा प्रवजेद् वनाद् वा” (जाबा.उप.4) इत्यादिश्रुतिभ्यो विहितत्वाविशेषात् कर्म-तत्त्यागयोः ऐच्छिको विकल्पो अङ्गीकार्यः, अतो न शेषि-शेषभावः इत्यतः उत्तरं पठति.

नियमाच्च॥7॥

“आश्विनं धूम्रललामम् आलभेत, यो दुर्ब्राह्मणः सोमं पिपासेद्” (तैत्ति.संहि.2।1।10),
“ऐन्द्राग्नं पुनरुत्सृष्टम् आलभेत, य आतृतीयात् पुरुषात् सोमं न पिबेत्, विच्छिन्नो वा एतस्य सोमपीथो यो ब्राह्मणः सन् आतृतीयात् पुरुषात् सोमं न पिबति” (तैत्ति.संहि.2।1। 15),
“यावज्जीवम् अग्निहोत्रं जुहुयात्” (बह्व.ब्राह्म.)

इत्यादिश्रुतिभ्यो यथा कर्मकरणे नियमः श्रूयते, न तथा तत्त्यागेइति न उक्तपक्षः साधुः इति अर्थः. ‘च’काराद् “नियतस्यतु सन्न्यासः कर्मणो नोपपद्यते, मोहात् तस्य परित्यागः तामसः परिकीर्तितः” (भग.गीता 18।7) इत्यादिरूपा स्मृतिः समुच्चीयते. त्यागविधिः अशक्तविषयः इति उक्तम् इति प्राप्ते॥7॥

प्रतिवदति.

अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्॥8॥

‘तु’शब्दः पूर्वपक्षं व्यवच्छिनत्ति. यदुक्तं “शेषत्वात् पुरुषार्थवादः” (ब्रह्मसू.3।4। 2) इति, तन्न उपपद्यते. कुतः? अधिकोपदेशात्. कर्मसाम्य-मपि न वक्तुं शक्यं यत्र, तत्र तच्छेषत्वं दूरापास्तम्. यतः ईश्वरः कर्मणः सकाशाद् अधिकः उपदिश्यते. तथाहि.
“स वा अयमात्मा सर्वस्य वशी सर्वस्य ईशानः सर्वस्य अधिपतिः सर्वम् इदं प्रशास्ति यदिदं किञ्च, स न साधुना कर्मणा भूयान्नो एव असाधुना कनीयान्”

(बृहदा.उप.4।4।22) इत्युपक्रम्य अग्रे पठ्यते

“तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेन अनाशकेन च एतमेव विदित्वा मुनिः भवति एतमेव प्रव्राजिनो लोकम् अभीप्सन्तः प्रव्रजन्ति” (तत्रैव)

इत्यादि. एवं सति यज्ज्ञानसाधनत्वं यज्ञे, तस्य यज्ञशेषत्वं कथं स्यात्? किन्तु यज्ञस्य तद्वेदनशेषत्वम्. एतेन इज्यत्वेन तच्छेषत्वं प्रत्युक्तं वेदितव्यम्. तज्ज्ञानस्य यागपूर्वाङ्गत्वात् तद्विशिष्टस्य तस्य ब्रह्मज्ञानसाधनत्वात्. नच पूर्वं सामान्यतः इज्यज्ञानम् आसीद्, यज्ञेन विशेषतो ज्ञाने सति पुनः यज्ञकरणे पूर्णं कर्मफलं 1भवतीति न तदशेषत्वम् इति वाच्यम्. “तमेव विदित्वा मुनिः भवति एतमेव प्रव्राजिनो लोकम् अभीप्सतः प्रव्रजन्ति” (बृहदा.उप.4।4।22) इति श्रुतेः तद्वेदनस्य गार्हस्थ्यविरोधित्वेन तदसम्भवात्. यश्च साध्वसाधुकर्मफल-सम्बन्धरहितः, तस्य कर्तृत्वेन तथात्वम् अनुपपन्नम्, अतो जीवात्मनएव तथात्वं, नतु परस्य. नच एतयोः वास्तवाभेदाद् न एवम् इति वाच्यम्. वास्तवाभेदाद् जीवेऽपि उक्तश्रुतिभ्यः तथात्वस्य सुवचत्वात्. वास्तवाभेदस्य पूर्वमेव निरस्तत्वात् तम् आदाय ये पूर्वपक्षाः ते पूर्वपक्षाएवेति अलम् उक्त्या.

“न कर्मणा न प्रजया धनेन त्यागन एके अमृतत्वम् आनशुः, परेण नाकं निहितं गुहायां विभ्राजते तद् यतयो विशन्ति”(महाना.उप.10।5) इति श्रुत्या कर्म-प्रजा-धनैः मोक्षाप्राप्तिम् उक्त्वा त्यागेन तत्प्राप्तिः उच्यते. त्यागविषयस्य अन्यस्य अनुक्त्या सान्निध्यात् कर्मादीनामेव त्यागो अभिप्रेतः. तथाच मुक्तोपसृप्यत्वाद् भगवतः उक्तसाधनेन मुक्ताः सन्तो नाकं परेण विद्यमानमपि भक्त्या गुहायां विभ्राजते, तद् “यस्मात् परं नापरम् अस्ति” (तत्रैव) इत्यादिना उपक्रान्तत्वात् पुरुषोत्तमस्वरूपं ‘यतयो’ विरहभावेन तद्विना स्थातुम् अशक्ताः तत्प्राप्त्यर्थं यतमाना ‘विशन्ति’ इति भक्तिमार्गीयाणां फलम् उक्तम्. अग्रे “वेदान्तविज्ञान” (महाना.उप.10।6) इति ऋचा ज्ञानमार्गीयाणां फलम् उक्तम्, अन्यथा पौनरुक्त्यं स्यात्. एवं कर्म-ज्ञानाभ्याम् अधिको भक्तिमार्गः, तत्प्राप्यः पुरुषोत्तमश्च श्रुतौ उपदिश्यतइति तदेकप्रमाणवादिनो बादरायणस्य मतमपि एवं जैमिनिमताद् अधिकम् इति अर्थः. एवं श्रुत्या परमतं निरस्य शिष्यविश्वासार्थं स्वानुभवमपि प्रमाणयति तद्दर्शनाद् इति. उक्ताधिक्यवत्त्वेनैव* भगवतो भक्तिमार्गस्य च अनुभवाद् इति अर्थः. “श्रुतयो अधिकम् आत्मानं दर्शयन्ति” इति न व्याख्यानम्. ‘उपदेश’पदेन पौनरुक्त्यापत्तेः. तन्मतम् अनिरस्य तस्मात् स्वमतः आधिक्यमात्रोक्त्या निष्कामकर्मणः चित्तशुद्धिहेतुत्वेन परम्पराज्ञानमार्गोपयोगाङ्गीकारो अत्र सूच्यते. पुष्टिभक्तिमार्गेतु सोऽपि न, “यन्न योगेन” (भाग. पुरा.11।12। 9) इति वाक्यात्. एवं सति क्व कर्मशेषत्वगन्धोऽपि ब्रह्मणि इति भावः॥8॥

तुल्यं दर्शनम्॥9॥

यदुक्तम् “आचारदर्शनात् कर्मशेषत्वं ब्रह्मणः” इति, तदपि न साधीयः. तुल्यं यतो दर्शनम्. ब्रह्मविदां शुकतृतीयजन्मवदार्षभादीनां त्यागदर्शनात्. एतेन यद्विदां कर्मत्यागः, तस्य कर्मशेषत्वं कथं शंकितुमपि शक्यम् इति भावः सूच्यते. एतेन “कर्मणि अशक्तान् प्रति त्यागविधिः” इति निरस्तम्. शुकादीनाम् अतथात्वात्॥9॥

ननु “जनको ह वैदेह” (बृहदा.उप.3।1।1) इति श्रुतिसाहाय्याद् आचारदर्शनं त्यागदर्शनाद् अधिकबलम् इत्यतः उत्तरं पठति.

असार्वत्रिकी॥10।

ब्रह्मविदां सर्वेषाम् एतद् आचारं चेद् निरूपयेत् श्रुतिः, तदा त्वदुक्तं स्याद्, नतु एवम्. यतः एतादृशी श्रुतिः ब्रह्मवित्सु सर्वेषु न श्रूयते. तथाहि.

“एतद्ध स्म वै तद्विद्वांस आहुः ऋषयः कावषेयाः,
किमर्था वयम् अध्येष्यामाहे? किमर्था वयं यक्ष्यामहे?”(ऐत.आर.3।2।6)

“एतद्ध स्म वै तत् पूर्वे विद्वांसो अग्निहोत्रं न जुहवाञ्चक्रिरे” (कौषी.उप.2।4),

“एतं वै तम् आत्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च
लोकैषणायाश्च व्युत्थाय अथ भिक्षाचर्यं चरन्ति” (बृहदा.उप.3।5।1),

“एतावद् अरे खलु अमृतत्वम् इ ह उक्त्वा याज्ञवल्क्यः प्रवव्राज”(तत्रैव 4।5।15)

इत्यादिश्रुतयो बह्व्यः तद्विदां कर्मत्यागमेव अनुवदन्ति, अतः त्यागपक्षएव बलवान्॥10॥

ननु ब्रह्मवित्वाविशेषेऽपि एकेषां कर्मकृतिः, एकेषां तत्यागः इति विभागः कुतः? इति आशङ्क्य तत्र हेतुम् आह.

विभागः शतवत्॥11।

"एतस्यैव आनन्दस्य अन्यानि भूतानि मात्राम् उपजीवन्ति" (बृहदा. उप.4।3।32) इति श्रुतेः मानुषानन्दम् आरभ्य ब्रह्मानन्दपर्यन्तं ये गणिता आनन्दाः ते सर्वे पुरुषोत्तमानन्दात्मकाएव. एवं सति येषु यावान् आनन्दो दत्तो अस्ति, तावन्तं तं निरूपयन्ति अधिकारतारतम्येन तद्दानम् इति ज्ञापनाय शतोत्तरं शतोत्तरम् आनन्दं श्रुतिः न्यरूपयत्. अतएव पुरुषायुःसंख्यासमानसंख्यैव उत्कर्षः उक्तः, तेन पुरुषधर्मस्य अधिकारस्यैव उत्कर्षः सूच्यते. एवं प्रकृतेऽपि अन्यभावराहित्यतारतम्येन भगवद्भावतारतम्यम्, अत्रतु अनुग्रहएव अधिकाररूपइति तदुत्कर्षे त्यागः, तदनुत्कर्षे न इति अर्थः॥11॥

यच्च उक्तं "तद्वतो विधानाद्" (ब्रह्मसू.3।4।6) इति, तत्र आह.

अध्ययनमात्रवतः॥12।

यदुक्तं "ब्रह्मिष्ठो ब्रह्म" (आप.श्रौ.सू.3।18।1) इत्यादि, तत्र 'ब्रह्म'शब्देन वेदएव उच्यते, नतु परः. तथाच तं ब्रह्मत्वेन अविकृतशब्दरूपत्वं ज्ञात्वा सततं तदध्ययनमात्रं यः करोति, नतु तेन किञ्चित् कामयते, तस्य अधिकारो ब्रह्मत्वार्त्विज्य इति उच्यतेइति न ब्रह्मज्ञानस्य कर्मशेषत्वम्. प्रत्ययस्य अतिशायनार्थकत्वाद् अतिशयेन ब्रह्मरूपः तदैव भवतीति युक्तं तस्य तदार्त्विज्यम्. एवं सति 'ब्रह्म'पदं ब्राह्मण्यपरमपि सङ्गच्छते.

अथवा. वेदाध्ययनमात्रवतः कर्मणि अधिकारः, नतु ब्रह्मविदोऽपि इति अर्थः. न च तदन्तःपातित्वेन वेदान्तानामपि अध्ययनस्य आवश्यकत्वे तत्प्रतिपाद्य-ब्रह्मज्ञानस्यापि अवर्जनीयत्वात् तद्वतएव तत्र अधिकारः इति वाच्यम्, शाब्दपरोक्षज्ञानस्य ब्रह्मज्ञानत्वाभावात्. नहि "सिता मधुरा" इति शाब्दज्ञानमात्रवान् तन्माधुर्यज्ञो भवति. तथा सति पित्तोपशमादिकं तत्कार्यमपि स्यात्, नतु एवम्. अतएव छान्दोग्ये सनत्कुमारेण "यद् वेत्थ तेन मोपसीद" (छान्दो.उप.7।1।1) इत्युक्तो नारदः ऋग्वेदम् आरभ्य सर्पदेवजनविद्यापर्यन्तं स्वाधीतम् उक्त्वा आह "सोऽहं मन्त्रविदेवास्मि, नात्मविद्" (छान्दो.उप.7।1 ।3) इति. अतो अपरोक्षब्रह्मज्ञानमेव ब्रह्मज्ञानम् उच्यते. अतएव तैत्तिरीयो-पनिषत्सु "वेदान्तविज्ञानसुनिश्चितार्थाः" (महाना.उप.10।6) इति पठ्यते. 'विज्ञानम्' अनुभवएव, नतु ज्ञानमात्रम्, अतो दूरापास्तं कर्मशेषत्वं ब्रह्मणः. "तं विद्या-कर्मणी" (बृहदा.उप.4।4।2) इत्यादिस्तु संसार्यात्मनः पूर्वदेह-त्यागसामयिकं वृत्तान्तं निरूपयति, नतु ब्रह्मविदः इति "समन्वारम्भणाद्" (ब्रह्मसू. 3।4।5) इति सूत्रम् उपेक्षितम् आचार्येण॥12॥

यच्च उक्तं "नियमाच्च" (ब्रह्मसू.3।4।7) इति तत्र आह.

न अविशेषात्॥13।

"आश्विनम्" (तैत्ति.संहि.2।1।10) इत्यादिश्रुतिभ्यः कर्मकृतौ यथा नियमः श्रूयते, न तथा त्यागे इति यदुक्तं, तद् न. कुतः? अविशेषात्. "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" (महाना.उप.10।5) इति श्रुतिः कर्मादिना अमृतत्वाप्राप्तिम् उक्त्वा तत्त्यागेन तां वदन्ती कर्मत्यागस्य आवश्यकत्वं वदतीति तस्माद् न विशेषो यतः इति अर्थः. तथाच 'अमृतत्व-मानशुः' इतिपदात् मुमुक्षोः कर्मत्यागनियमः, अमुमुक्षोः तत्कृतिनियमः इति व्यवस्था इति भावः.

अथवा. ननु क्रमप्राप्ते तुरीयाश्रमे हि कर्मत्यागः, द्वितीये तस्मिन् कर्मकरणनियमः. तत्रच कर्तुः अङ्गत्वेन तत्स्वरूपज्ञानम् आवश्यकम्. तच्च वेदान्तैरेव इति कथं न कर्मशेषत्वम्? इति उत्सूत्रम् आशङ्क्य निषेधति न इति. "यदहरेव विरजेद्" (जाबा.उप.4) इति श्रुतेः "तावत् कर्माणि कुर्वीत न निर्विद्येत यावता" (भाग.पुरा.11।20।9) इति भगवद्वाक्याच्च त्यागे वैराग्यस्य च प्रयोजकत्वाद् आश्रमविशेषे विशेषाभावाद् अप्रयोजकत्वाद् इति अर्थः. यत्रापि क्वचित् क्रमप्राप्तिः तत्रापि न तज्ज्ञानं ब्रह्मज्ञानम् इति पूर्वसूत्रएव उक्तम् इति भावः. एतेन वेदाध्ययनादिकमपि अप्रयोजकम् इति ज्ञापितम्. अतएव शुकस्य वैराग्यातिशयाद् उपनयनादेरपि अनपेक्षा उच्यते. एवं सूत्रद्वयेन कर्माधिकारसम्पादकत्वेन ब्रह्मज्ञानस्य तच्छेषत्वं निरस्तम्॥13॥

अथ ग्रहिलतया 'ब्रह्मिष्ठः' इत्यत्र 'ब्रह्म'पदेन परएव उच्यते इति वदसि, तत्रापि वदामः.

स्तुतयेऽनुमतिर्वा॥14॥

दर्शपूर्णमासौ एतादृशौ यत्र ब्रह्मविदार्त्विज्याधिकारीति तत्स्तुत्यर्थं "ब्रह्मिष्ठो ब्रह्मा"(आप.श्रो.सू.3।18।1) इत्यनेन ब्रह्मविदोऽपि आर्त्विज्ये अनुमतिः क्रियते, नतु तस्य अधिकारित्वम् अभिप्रेतम्, उक्तानुपपत्तिभिः इति अर्थः॥14॥

कामकारेण चैके॥15॥

ननु "एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान्" (बृहदा.उप.4।4।23) इति श्रुत्या ब्रह्मविदः कर्मकृतगुणदोषौ निषिध्येते, सच प्राप्तिपूर्वकः इति ब्रह्मविदः कर्मकरणम् आवश्यकम् इति प्राप्ते, उच्यते कामकारेण इति. करणं कारः. कामेन इच्छया करणं कामकारः. तथाच परानुग्रहार्थम् इच्छामात्रेण, नतु विधिवशाद्, यत् करणं, तत् कामकारः इति उच्यते. तथाच एवं कृते कर्मणि तत्कृतगुणदोषप्रसक्तौ तत्प्रतिषेधम् एके शाखिनः "एष नित्यः"(बृहदा.उप.4।4।23) इत्यादिना पठन्ति. नहि एतावता कर्मकृत्यधिकारप्राप्तिः इति भावः.

अथवा. कामेन कारो यस्य सः तथा. तादृशेन कर्मणा प्राप्तवृद्धि-ह्रासयोः सम्बन्धाभावं ब्रह्मविदि एके पठन्ति इति अर्थः. चकारेण ईश्वराज्ञया लोकसंग्रहार्थं कृतं कर्म समुच्चीयते. "सर्वस्य वशी सर्वस्य ईशानः" (बृहदा. उप. 4।4।22) इतिश्रुतेः तथा॥15॥

उपमर्दं च॥16॥

अनेन कर्माधिकाराभावे हेत्वन्तरम् उच्यते. द्वैतभाने हि यथाकथञ्चित् कर्मकृतिसम्भावनापि. यस्यतु अखण्डब्रह्माद्वैतभानं 'ब्रह्म' इत्येव, नतु "इदं ब्रह्म" इति सखण्डम्. अत्र उद्देश्यत्वेन प्रपञ्चस्यापि भानात् सखण्डत्वम्. तथाच अखण्डतद्भाने कर्मतदधिकारादेः उपमर्दं च एके शाखिनः पठन्तीति न ब्रह्मज्ञानस्य कर्मशेषत्वसम्भावनापि इति अर्थः. श्रुतिस्तु "यत्र त्वस्य सर्वम् आत्मैव अभूत् तत् केन कं पश्येत्?" (बृहदा.उप.4।5।15) इत्यादिरूपा ॥16॥

ऊर्ध्वरेतस्सु च शब्दे हि॥17॥

अत्र इदं विचार्यते : ब्रह्मचर्यानन्तरं गार्हस्थ्यमपि श्रुत्या बोध्यते. "ब्रह्मचर्यादेव प्रव्रजेद्"(जाबा.उप.4) इत्यादिश्रुतिभिः ब्रह्मचारिणएव प्रव्रजनमपि बोध्यते. एवं सति अविरोधाय "यदहरेव" (तत्रैव 4) इति श्रुतेश्च रागितद्रहितभेदेन विषयभेदो वाच्यः. तत्र ब्रह्मचर्याविशेषेऽपि भगवदनुग्रह-विशेषजचित्तशुद्धिविशेषजवेदान्तार्थपरिज्ञानमेव हेतुः वाच्यः. "वेदान्तविज्ञान-सुनिश्चितार्थाः सन्न्यासयोगाद् यतयः शुद्धसत्वा"(महाना.उप.10।6) इति श्रुतिः इममेव अर्थम् आह. तथाच एतादृशाएव ऊर्ध्वरेतसः इति उच्यन्ते. एवं सति ऊर्ध्वरेतस्सु कर्माभावः उक्तरीत्या त्वयापि ऊरीकार्यइति ज्ञानरहितानां कर्मण्यधिकारः, तद्वतां सन्न्यासः इति. त्वदुक्ताद् विपरीतो अर्थः सिध्यतीति क्व कर्मशेषत्वसम्भावना ज्ञाने

ननु सन्न्यासेऽपि तदाश्रमीणं कर्म अस्तीति वैराग्यसहकृतं ज्ञानम् एतच्छेषभूतं, तदसहकृतं तदग्निहोत्रादिशेषभूतमिति न वैपरीत्यम् इति प्राप्ते, आह शब्दे हि इति. ज्ञानस्वरूपं तत्फलं च न युक्तिसिद्धं, किन्तु वेदमात्रसिद्धम्. तत्रतु "तम् एवं विद्वान् अमृत इह भवति" (नृसिं.पू.उप.1।6) "ब्रह्मविद् आप्नोति परम्" (तैत्ति.उप.2।1) "य एनं विदूः अमृतास्ते भवन्ति" (बृहदा.उप. 4।4।14) इत्यादिवाक्यैः ब्रह्मज्ञानस्य मोक्षएव फलं श्रूयते, सर्वसाधनानां साक्षात्-परम्पराभेदेन तत्रैव पर्यवसानात्. अतो धर्मिग्राहकमानविरोधात् सन्न्यासाश्रमीण-कर्मशेषत्वमपि न वक्तुं शक्यम् इति अर्थः. ननु एवं सन्न्यासवैयर्थ्यम् इति चेद्, न, ब्रह्मविदतिरिक्तसङ्गस्य भगवद्विस्मारकत्वेन अवश्यत्याज्यत्वेन श्रुत्या कथनात्. अतएव "वेदान्तविज्ञानसुनिश्चितार्थाः"(मुण्ड.उप.3।2।6) इति उक्त्वा, "सन्न्यासयोगाद् यतयः शुद्धसत्वाः" (तत्रैव) इति उक्तम्. अत्र पञ्चम्या अन्तःकरणे संस्कारविशेषाधायकत्वं च प्रतीयते सन्न्यासस्य. सः संस्कारः फलोप-कार्यङ्गमिति आवश्यकः सन्न्यासो मर्यादामार्गे. पुष्टिमार्गेतु अन्यैव व्यवस्था. "न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेद् इह"(भाग.पुरा.11।20।31) इति वाक्यात्.

परामर्शं जैमिनिरचोदना च अपवदति हि॥18॥

ऊर्ध्वरेतस्सु च ज्ञानोक्तेः तस्य मुक्तिफलकत्वोक्तेः "किं प्रजया करिष्यामो येषां नो अयम् आत्मा न अयं लोकः" (बृहदा.उप.4।4।22) इत्यादि-श्रुतेश्च ब्रह्मप्राप्तावेव सर्वस्याः श्रुतेः तात्पर्यम् इति सिध्यति, तस्याएव सर्वक्लेशापायपूर्वक-परमानन्दरूपत्वाद्, नतु कर्मणि, दुःखात्मकसंसारहेतुत्वात् तस्य. जीवश्रेयोनिमित्तमेव श्रुतिप्राकट्यात्. अन्यथा

निषेधविधिः न स्यात्. तथाच कर्मविधिनापि परम्परामोक्षएव फलत्वेन परामृश्यते इति सिद्धम्. तं परामर्शं कर्मस्वातन्त्र्यवादी जैमिनिः अपवदति बाधते इति अर्थः. मोहकशास्त्रप्रवर्तकः सः इति ईश्वरमेव न मनुते यतः, अतः तत्प्राप्तिः तस्य मते दूरापास्ता. कर्मानधिकारिणाम् अन्धादीनां सन्न्यासविधिविषयत्वम्. अन्यथा "वीरहा वा एष देवानां योग्निम् उद्वासयते" (तैत्ति.संहि.1।1।5।2) इति श्रुतिः न स्यात्. अतो "ब्रह्मचर्यं समाप्य गृही भवेद्, गृहाद् वनी भूत्वा प्रव्रजेद्, यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद् वनाद् वा" (जाबा.उप.4) इति श्रुतेरपि अङ्गहीनएव सः विषयः, यतः आयुर्भागविभागेन आश्रमाणां विधानम्. तुरीये तस्मिन् देहेन्द्रियादिवैकल्यं नियतम्, अतः कर्मण्येव श्रुतेः तात्पर्यम्. अपि च ज्ञान-कर्मणोः अलौकिकफलसाधकत्वे तत्त्वेन विहितत्वमेव प्रयोजकम्. अपरोक्षब्रह्मज्ञानं च न विधेयम्, साक्षात्स्वकृत्यसाध्यत्वात्. चोदनाबोधक-लिङाद्यभावाच्च ज्ञानस्य न मुक्तिसाधकत्वं वक्तुं शक्यम्. "य एनं विदुः" (बृहदा.उप.4।4।14) इत्यादिस्तु यागेषु इज्यविष्णु-स्तुतिपरा इति आशयेन आह अचोदना च इति. जैमिनिवत् तत्सहायभूता इयम् अचोदना च परामर्षम् अपवदति इति सम्बन्धः. तथाच विधिसम्बधात् कर्मैव अनुष्ठेयं, नतु मुक्तिसाधनमपि, अतथात्वाद् इति स्थितम्॥18॥

अनुष्ठेयं बादरायणः साम्यश्रुतेः॥19॥

बादरायणः अचार्यो जैमिनेरपि गुरुः "तदेव कर्तव्यम्" इति शिष्यसम्मतम् अनुष्ठेयं कर्म अपवदति इति पूर्वेण सम्बन्धः. तत्र हेतुः साम्यश्रुतेः. यथा "वीरहा वा एष देवानाम्" (तैत्ति.संहि.1।5।2) इति श्रुत्या कर्मत्यागकर्तुः निन्दा श्रूयते, एवमेव भगवज्ज्ञानरहितस्यापि सा श्रूयते यतः. तथाहि. "असुर्या नाम ते लोका अन्धेन तमसावृताः, तांस्ते प्रेत्य अभि गच्छन्ति अविद्वांसोऽबुधा जनाः" (ईशोप.3), एतद् अग्रे च, "ये तद् विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवोपयन्ति" (बृहदा.उप.4।4।14) इत्यादिरूपा. एतच्च निन्दामात्रेण साम्यम् उक्तम् आपाततः. वस्तुतस्तु

"तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेन अनाशकेन च एतमेव विदित्वा मुनिर्भवति एतमेव प्रव्राजिनो लोकम् ईप्सन्तः प्रव्रजन्ति" (बृहदा.उप.4।4।22)

इति श्रुत्या ज्ञानसाधनत्वेनैव आश्रमकर्मकरणोक्तेश्च न स्वातन्त्र्यं कर्मणो वक्तुं शक्यम्. अतएव शुकस्य न ब्रह्मचर्यादिकमपि, फलस्य जातत्वेन तत्साधनानपेक्षणात्. नच 'स्वर्गकाम'पदश्रवणाद् न एवम इति वाच्यम्. त्वदभिमतलोकात्मकस्वर्गे "यन्न दुःखेन सम्भिन्नम्"(आप.श्रौ............) इति वाक्यशेषोक्त'स्वर्ग'पदप्रवृत्तिनिमित्तधर्माभावाद् आत्मसुखस्यैव तादृशत्वात् तस्यैव तत्र उक्तेः. एवं सति "तमेतं वेदानुवचनेन" (पूर्ववद्) इति श्रुत्येक-वाक्यतापि सम्पद्यते. अन्यथातु विरोधएव.

ननु दृष्टफलकापि कारीरी-चित्रादियागाः श्रूयन्तेइति न एवं निर्णयः इति चेद्, उच्यते. नित्यकर्मणो हि ज्ञानसाधनत्वम् उच्यते. व्रीहि-पश्वादीनां तन्निर्वाहकत्वात्

तच्छेषत्वेन तेषां विधानम्. एवं सति “वीरहा” (तैत्ति. संहि. 1।5।2) इति श्रुतिः साग्निकस्य गृहिणः आलस्यादिदोषेण तदुद्वासने दोषम् आह, नतु आश्रमान्तरपरिग्रहे इति मन्तव्यम्. अन्यथा तदुच्छेदः तद्विधिवैयर्थ्यं च स्यात्. नच अनधिकृतम् आदाय तत्समाहितिः इति वाच्यम्. अत्र पृच्छामः.

अन्धपङ्ग्वादिभिः प्रव्रजनं कार्यम् इति विधिः अस्ति, आहोस्विद् यावज्जीवम् अग्निहोत्रविधायकप्रव्रजनविधायकवाक्ययोः विरोधाभावाय विषयो भिन्नः कल्प्यते? न आद्यः, अश्रुतेः. न द्वितीयः “यदहरेव विरजेत्”(जाबा.उप. 4) इति श्रुत्या वैराग्यवतः प्रव्रजनविधानात् तेनैव विषयभेदसिद्धौ 2तत्कल्पना-नवकाशात्. तेन “न अपुत्रस्य लोको अस्ति”(ऐत.ब्राह्म.7।13।12) इति श्रुतिरपि अविद्वद्विषयिणीति न विरोधः. “विद्वांसः प्रजां न कामयन्ते” (बृहदा. उप.4।4।22) इति श्रुतेः. एतेन ऋणत्रयापाकरणमपि प्रत्युक्तं वेदितव्यम्, अविद्वद्विषयत्वात्. यदपि उक्तम् ‘अचोदना च’ (ब्रह्मसू.3।4।18) इति सूत्रावयवेन चोदनाबोधकलिङाद्यभावो बाधकः इति. तदपि न साधीयः. श्रुति-साम्यादेव. श्रूयते हि “तस्माद् एवंवित् शान्तोदान्तः उपरतः तितिक्षुः श्रद्धावित्तो भूत्वा आत्मन्येव आत्मानं पश्येद्”(बृहदा.उप. 4।4।14) इति. नच प्रमाणवस्तु-परतन्त्रत्वाद् न ज्ञानस्य विधेयता इति वाच्यम्. इतरज्ञानस्य तथात्वेऽपि जीवात्मलक्षणे अधिष्ठाने परमात्मनो भगवतो दर्शनस्य अन्यतो अप्राप्तत्वात्, श्रद्धान्तसाधनैः तद्दर्शने स्वरूपयोग्यतासम्पत्तौ आत्मनि अधिष्ठाने परमात्म-दर्शनानुकूलप्रयत्नविधानसम्भवात् श्रवणविधिना श्रुतिवाक्यजशाब्दज्ञानानुकूल-प्रयत्नविधानवत्. एवमेव हि यागविधिनापि क्रियारूपयागस्य स्वानुकूल-प्रयत्नाधीनत्वेन सः प्रयत्नएव विधीयते, अन्याप्राप्तत्वाद्. नतु क्रिया. तत्प्रयत्ने सति तस्याः स्वतएव सम्भवात्.

अथवा. ननु यथा “वीरहा”(तैत्ति.संहि.1।1।5।2) इति श्रुत्या कर्मत्यागो निन्द्यते तथैव “असुर्या नाम ते लोका अन्धेन तमसा वृताः, तांस्ते प्रेत्याभि गच्छन्ति अविद्वांसो अबुधा जनाः”(ईशोप.3) “ये तद्विदुः अमृतास्ते भवन्ति अथेतरे दुःखमेव उपयन्ति”(बृहदा.उप.4।4।24) इत्यादिश्रुत्या भगवज्ज्ञानाभावो निन्द्यते. एवं सति कर्मज्ञानानुकूलप्रयत्नयोः विधेयत्वे मिथो विरोधाद् अधिकारिभेदेन विधेयत्वं वाच्यम्. नच “तावत् कर्माणि कुर्वीत न निर्विद्येत यावता”(भाग.पुरा.11।20।9) इति भगवद्वाक्याद् रागिणः कर्म विधीयते तद्रहितस्य ज्ञानम् इति वाच्यम्. “जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेज”(बृहदा.उप.3।1।1) इति श्रुतेः नीरागत्वेन प्रसिद्धस्यापि तस्य कर्मणि प्रवृत्तिः या, सा न स्याद्, अधिकाराभावात्. अथ जनकदृष्टान्तेन कर्मणो अङ्गित्वं ज्ञानस्य तदङ्गत्वं वाच्यम्. तथाच ज्ञानवता कर्म अनुष्ठेयम् इति प्राप्तं प्रतिवदति अनुष्ठेयं बादरायणः साम्यश्रुतेः. ज्ञानम् अङ्गं तदङ्गित्वेन अनुष्ठेयं कर्म इति मतं बादरायणो अपवदति इति पूर्वेण सम्बन्धः. तत्र हेतुम् आह साम्यश्रुतेः इति. स्वतो अपुरुषार्थं कर्म फलार्थिनैव अनुष्ठेयम्. तथाच “एष नित्यो महिमा”(बृहदा.उप.4।4।23) इति श्रुत्या ज्ञानवति विहित-निषिद्धयोः कर्मणोः फलाजनकत्वेन साम्यं श्रूयते इति

फलार्थिप्रवृत्त्यसम्भवेन ज्ञानिनः तथात्वाभावेन कर्मोच्छेदप्रसक्त्या न ज्ञानस्य अङ्गत्वं वक्तुं शक्यम्. कृषीवलस्य व्रीहीणां वपने भर्जनस्येव. तथाच ज्ञानिनः प्रवृत्यसम्भवेन अन्येषां च "अथ इतरे दुःखमेव उपयन्ति"(बृहदा.उप.4।4।14) इति निन्दाश्रवणेन तथात्वात् सर्वार्थतत्त्वज्ञा श्रुतिः ज्ञानबहिर्भूतं कर्म कथं विदध्याद्? इति ज्ञानस्य पुरुषार्था-साधकत्वोक्तिम् असहमानेन आचार्येण प्रौढ्या निरूपितम्॥19॥

एवं सति पूर्वकाण्डवैयर्थ्यम् आपततीति तत्तात्पर्यम् आह.

विधिर्वा धारणवत्॥20॥

यथा योगशास्त्रे मनःसमाधेरेव साध्यत्वात् तत्साधनत्वेनैव मानस्याः मूर्तेः धारणं विधीयते, नतु स्वतन्त्रतया फलसाधकत्वेन, मनःसमाधौ तत्त्यागात्, "ततः किञ्चन न स्मरेत्" (भाग.पुरा.11।14।44), "तच्चापि चित्तबडिशं शनकैः वियुंक्ते" (भाग.पुरा.3।28।34) इत्यादिवाक्येभ्यः तथा, तथा भक्ति-साधनत्वेनैव अनुष्ठेयम् इति तात्पर्येण कर्मविधिः उच्यते, नतु स्वतन्त्रतया फलसाधकत्वेन. ननु तत्र समाधिम् अधिकृत्य यमादीनि उक्तानीति तन्मध्य-पातित्वेन धारणस्य तथात्वम् *उच्यते, प्रकृते ज्ञानं भक्तिं वा अधिकृत्य न कर्म विहितमिति दृष्टान्तवैषम्यम् इति चेद्, न, उक्तानुपपत्त्या स्वानिन्द्यमेव कर्म श्रुतिः विदधाति इति अवश्यं वाच्यम्. निन्दायां च इतरपदाद् ज्ञानमध्यपातिनएव तद्विषयस्य प्राप्तेः आवश्यकत्वात्. तथाच भगवज्ज्ञानस्य इतरनिरपेक्षत्वेन स्वरूपोपकारित्वम् अस्य कर्मणो वाच्यम्. तथाच उक्तं "दान-व्रत-तपो-होम-जप-स्वाध्याय-संयमैः, श्रेयोभिः विविधैश्च अन्यैः कृष्णे भक्तिर्हि साध्यते" (भाग.पुरा.10।47।24) इति. "एष नित्यो महिमा" (बृहदा.उप.4।4।23) इति श्रुतिरपि यज्ज्ञाने सति विहित-निषिद्धकर्म-फलासम्बन्धः तद्वित् स्याद् इति अनुक्त्वा "तस्यैव पदवित् स्यात्" (बृहदा.उप.4।4।23) इति यद् उक्तवती, तेन पदयोः भक्तिमार्गरूपत्वात्, तत्र च पदयोरेव सेव्यत्वेन मुख्यत्वात्, तज्ज्ञाना-नुकूलप्रयत्नमेव पूर्वं विदधे. तेन

"शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनाः,
त एव पश्यन्ति अचिरेण तावकं भवप्रवाहो परमं पदाम्बुजम्"
(भाग.पुरा.1।9।36)

इति वाक्याच्च वर्णाश्रमधर्माः आत्मधर्माश्च पदज्ञानसाधनत्वेन कर्तव्या इति सिद्धम्. 'तस्यैव' तच्छब्दस्य प्रसिद्धार्थकत्वात् लोकवेदप्रसिद्धस्य पुरुषोत्तम-स्यैव, तत्रापि, 'पदवि'देव, दीनभावेन भक्तिमार्गीयज्ञानवानेव, स्यादेव इति 'एव'कारः सर्वत्र अनुषज्यते. तथा सति भक्तौ जातायां स्वतएव भगवज्ज्ञानं भवति इति ज्ञापयितुं "तं विदित्वा" (बृहदा.उप.4।4।24) इति पश्चाद् उक्तवती इति तदाशयो ज्ञायते. अतएव पूर्वं कर्म निरूपितं, साधनत्वात्.

स्याद् एतत्. भक्तिसाधनत्वमेव चेत् कर्मणः श्रुतेः अभिप्रेतं, तदा भगवद्विदि तत्फलासम्बन्धः इति अनुपपन्नम् इति चेद्, मैवम्. कर्मणां हि भक्त्युत्पत्तौ

स्वरूपयोग्यतासम्पादकत्वमेव. “नायमात्मा”(कठोप.2।22) इति श्रुतेः कर्मज्ञानाभ्याम् अलभ्यत्वाद् भगवतः स्वरूपयोग्यतापेक्षापि मार्यादिकस्य नतु पौष्टिकस्य, अतएव वाशब्दः उक्तो अनियमवाची. तथा सति भगवदनुग्रहः चेत्, तदा भक्तिः, तया पुरुषोत्तमज्ञानं, तदा कर्मतत्फलसम्बन्धगन्धोऽपि न इति किम् अनुपपन्नम् एतेन, “तमेव विदित्वा मुनिर्भवति”(बृहदा.उप.4।4।22) “अग्राह्यो न हि गृह्यते”(बृहदा.उप.3।9।36) इत्यादिश्रुतीनां मिथो विरोधः परिहृतः, भक्त्या ग्राह्यत्वात् तदितरसाधनाग्राह्यत्वात्. अतएव ‘विविदिषन्ति’, नतु विदन्त्यपि इति आशयवती “तमेतं वेदानुवचनेन” (बृहदा. उप.4।4।2) इति श्रुतिः पठ्यते.

नच अनुपदमेव, “तमेव विदित्वा मुनिर्भवति” (पूर्ववत्) इति उक्तेः सान्निध्याद् उक्तसाधनैरेव वेदनम् अभिप्रेतम् इति वाच्यम्. वेदानुवचनादीनां सर्वेषां वेदनसाधनत्वे सर्वेषां तत्कर्तॄणां वेदनसम्भवेन ‘मुनिर्भवति’ इति एकत्वं तद्विदि न वदेद्, अतो ज्ञानं कस्यचिद् एकस्य भवति इति ज्ञानस्य दुर्लभत्वं ज्ञाप्यते. “मनुष्याणां सहस्रेषु कश्चिद् यतति सिद्धये, यततामपि सिद्धानां कश्चिन् मां वेत्ति तत्त्वतः” (भग.गीता7।3) इति भगवद्वाक्याच्च. तर्हि वेदानुवचनादिषु निःशङ्का प्रवृत्तिः कथम्? इत्थम् : “स वा अयमात्मा” (बृहदा.उप.4।4।22) इत्यादिकया पूर्वश्रुत्या भगवन्माहात्म्यं श्रुत्वा यथाकथञ्चित् तद्वेदनौत्सुक्ये सति सत्सङ्गाभावेन भक्ति-मार्गापरिचयात् कर्ममार्गमात्रम् आश्रमधर्मत्वेन अलौकिकार्थसाधकत्वेनापि पूर्वं ज्ञातम् अस्तीति तदेव भगवद्वेदनेऽपि साधनम् इति मन्यमानाः तदेव कुर्वन्ति. ननु वैदिकसाधनानां वैयर्थ्यं कथम्? इति चेद्, न, भ्रमकृतत्वेऽपि जन्मान्तरीय अक्षर-ज्ञानोपयोगिसंस्काराधायकत्वेन अवैय्यर्थ्यात् ॥20॥

स्तुतिमात्रम् उपादानाद् इति चेद् न अपूर्वत्वात्॥21॥

ननु साम्यश्रुतेः हेतोः कर्मशेषत्वं ज्ञानस्य यद् अपास्तं, तद् न उपपद्यते. साम्योक्तेः ज्ञानस्तुतिरूपत्वात्. अपिच. तया ज्ञानिनोऽपि कर्मोपादानात् कर्मकृतिस्वीकाराद् इतियावत्. अन्यथा ज्ञानिनां कर्मकृत्यभावेन तत्कृत-गुणदोषाप्रसक्त्या तन्निषेधानुपपत्तिः स्यात्. तेषामपि तत्कृतगुणदोषसम्बन्धो अस्त्येव इति ज्ञापनाय मात्रपदम्. निषेधेन इतरसाधारण्यं परिह्रियते. तथाच ज्ञानिनोऽपि कर्मकरणात् कर्मशेषत्वं ज्ञानस्य निष्प्रत्यूहम् इति चेद्, न एवं वक्तुं युक्तम्. पदज्ञानस्य कर्मफलासम्बन्धफलकत्वस्य अपूर्वत्वाद् विधेयत्वमेव. न हि यस्य कर्मणो ज्ञानस्य वा यत् फलं तदुक्तिरपि स्तुतिरेव इति युक्तम्, तयोः उच्छेदापत्तेः. विधिः हि प्रवर्तकः. तस्य पुरुषप्रवृत्त्युपयोग्यर्थकथनेनैव चारितार्थ्याद् अन्यार्थकथनस्य स्तुतित्वम् अस्तु नाम. न हि एवं प्रकृते. मुमुक्षोः कर्मबन्धाभावप्रेप्सोः तत्साधनत्वज्ञानएव प्रवृत्तिसम्भवात्. यच्च कर्मफल-सम्बन्धनिषेधानुपपत्त्या कर्मसम्बन्धः इति उक्तं, तद् न साधीयः. न हि तरणौ तमःकार्याभावः इति उक्तेः तत्प्राप्तिरपि सम्भवति.

अथवा. पुरुषोत्तमज्ञानमुख्यफलस्य अतिमहत्त्वेन साक्षाद् वक्तुम् अशक्यत्वं ज्ञापयन्ती कैमुतिकन्यायेन परम्परया तद् आह अनया ऋचा “तं विदित्वा ब्राह्मणो भवति”

(बृहदा.उप.4।4।23) इति श्रुतेः 'ब्राह्मण' पदेन ब्रह्मविद् उच्यते. तथाच 'आद्य'पदेन बुद्धिस्थब्राह्मणमाहात्म्योद्देशे कृते, सः कः? इति आकांक्षायाम् आह तं ब्राह्मणं विदित्वा विहितनिषद्धफलासम्बन्धी भवति इति लक्षण इति अर्थः. साक्षाद्भगवद्विदः किमु वाच्यम् इति भावः. अतः 'तस्यैव' 'तच्'छब्दस्य पूर्वपरामर्शित्वाद् ब्राह्मणस्यैव भगवद्विदो भक्तस्यैव "पदवित् स्यात्" (बृहदा. उप.4।4।23) तज्ज्ञानानुकूलप्रयत्नवान् स्यात्, तद् भजेत इति यावत्. तथाच यत्र *भक्तविद्विषयकज्ञानस्यापि उक्तरीत्या न कर्मशेषत्वं वक्तुं शक्यं, तत्र भगवज्ज्ञानस्य तथात्वं दूर-दूरतरम् इति सर्वं सुस्थम्॥21॥
पारिप्लवार्था इति चेद्, न, विशेषितत्वात्॥22॥

अथ प्रकारान्तरेण शङ्कते,
"भृगुर्वै वारुणिः वरुणं पितरम् उपससार" (तैत्ति.उप.3।1),
"अधीहि भगव इति होपससाद सनत्कुमारं नारदः" (छान्दो.उप.7।1।1),
"प्रतर्दनो ह वै दैवोदासिः इन्द्रस्य प्रियं धामोपजगाम" (कौषी.उप.3।1)

इत्याद्युपाख्यानैः हि ब्रह्मविद्या निरूप्यते. "सर्वाणि आख्यानानि पारिप्लवे शंसति" (आप.श्रौ) इति श्रुत्या शंसनशेषत्वं तेषाम् अवगम्यते. शंसने शब्दमात्रस्य प्राधान्येन अर्थज्ञानस्य अतथात्वाद् उपदेशान्ताख्यानप्रतिपाद्यं ज्ञानं मन्त्रार्थवद् अप्रयोजकमिति कर्मशेषत्वमपि न वक्तुं शक्यम्. प्राधान्यन्तु दूरापास्तम्. धर्मिणएव असिद्धिः इति आह पारिप्लवार्था इति. उक्तरीत्या सर्वाः उपाख्यानश्रुतयः कर्मशेषभूता इति अर्थः. अत्र आचार्यः एवमपि कर्मशेषत्वं ज्ञानस्य न सम्भवति इति आह न इति. कुतः? विशेषितत्वात्. कर्मणः सकाशाद् ज्ञानं विशेषितम् अधिकधर्मविशिष्टत्वेन उक्तमिति न ज्ञानस्य कर्मशेषत्वम् इति अर्थः. ननु विशेषितत्वम् आख्यानेष्वेवेति अप्रयोजको हेतुः इति चेद्, मैवम्, आचार्याशयानवगमात्. तथाहि पूर्वं "तुष्यतु दुर्जन" इति न्यायेन आख्यानानां शंसनशेषत्वम् उपेक्षित्वा उच्यते. नहि आख्यानेष्वेव ज्ञानं निरूप्यते, किन्तु अन्यत्रापि. तथाहि. तैत्तिरीयके पठ्यते "ब्रह्मविद् आप्नोति परं, तदेषा अभ्युक्ता, सत्यं ज्ञानम् अनन्तं ब्रह्म" (तैत्ति.उप.2।1) इत्युपक्रम्य, माहात्म्यविशेषज्ञानार्थम् आकाशादिकर्तृत्वम् उक्त्वा, आनन्दमयत्वं रसरूपत्वम् उक्त्वा, "भीषा अस्माद्" (तत्रैव) इत्यादिना सर्वनियामकत्वं च उक्त्वा, भगवानेव पूर्णानन्दः इति ज्ञापनाय आनन्दगणनां कृत्वा, आनन्दमयं पुरुषोत्तमं प्राप्तेन अनुभूयमानानन्दस्वरूपं, "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" (तत्रैव) इत्यादिना उक्त्वा, तद्विदो माहात्म्यम् उच्यते "एतं ह वाव न तपति किम् अहं साधु न अकरवं किम् अहं पापम् अकरवम्" (तैत्ति.उप.2।9) इति. अत्र ज्ञानवान् सच्चिद्रूपदेशकालापरिच्छिन्नं सर्वकर्तारं निरवध्यानन्दात्मकं सर्वनियामकं मनोवागगोचरं पुरुषोत्तमं प्राप्नोति. कर्मतु स्वयं क्लेशात्मकं, तद्वांश्च "अस्यैव आनन्दस्य अन्यानि भूतानि मात्राम् उपजीवन्ति"(बृहदा. उप.4।3।32) इति श्रुतेः क्षुद्रतरानन्दजनकस्वर्ग-पश्वादि-फलम् आप्नोतीति विहितनिषिद्धकर्मणोश्च

अप्रयोजकत्वं तस्मिन् उच्यतइति कर्मणः सकाशाद् ज्ञानस्य निरवधिरेव विशेषः उच्यतइति न 1धर्म्यसिद्धिः, न वा कर्मशेषत्वं ज्ञानस्य सिध्यति॥22॥

तथापि आख्यानप्रतिपादितविद्यानाम् असिद्धिरेव इति चेत्, तत्र आह.

तथा चैकवाक्यतोपबन्धात्॥23॥

यथा केवलश्रुतेः विद्याप्राधान्यं, तथैव उपाख्यानश्रुतीनाम् इति अर्थः. चकारेण प्रश्नोत्तरैः निर्णीतार्थप्रतिपादनम्. महतामेव अत्र प्रवृत्तिः. सापि बह्वायासपूर्विका इति विद्यामाहात्म्यज्ञापनं प्ररोचनं च अधिकम् उपाख्यानानाम् उपाख्यानं विनैव विद्यानिरूपिकायाः श्रुतेः सकाशाद् इति उच्यते. तत्र हेतुः एकवाक्यतोपबन्धाद् इति. "आचार्यवान् पुरुषो वेद" (छान्दो.उप.6।14। 2) इति श्रुत्या एकवाक्यताज्ञानम् आख्यानं विना न भवतीति तदर्थम् उपबन्धात् गुरु-शिष्यकथोपबन्धाद्2 इति अर्थः.

अथवा. उपाख्यानरहितायां श्रुतौ यथा ज्ञानं निरूप्यते, तथैव "अधी हि भगव इति होपससाद सनत्कुमारं नारदः"(छान्दो.उप.7।1।1) इत्याद्याख्यानेष्वपि निरूप्यतइति अनाख्यानश्रुत्या एकवाक्यतयैव आख्याने ज्ञान-स्वरूपोपबन्धात् प्रतिपादनाद् इति अर्थः. नैकट्यवाचिना 'उप'पदेन 1वस्तुसती या तत्तद्ुरुतत्तच्छिष्यकथा तत्सामीप्यम् अत्र उच्यते. अन्यथा सामीप्यासम्भवाद् अतः कल्पितत्वशङ्कानिरासः. ननु एवमपि पारिप्लवार्थत्वेन बाधकं पश्याम इति चेद्, उच्यते. अश्वमेधप्रकरणे, "मनुः वैवस्वतो राजा" (शतप.ब्राह्म.13।4। 3।3) इत्यादीनि आख्यानानि यत्र पठितानि, तत्र सामान्यतः तेषां विनियोगः, "सर्वाणि आख्यानानि पारिप्लवे शंसति" इत्यनेन उक्तइति 'सर्व'शब्दः तदाख्यानपरएव, नतु आख्यानान्तरपरोऽपि, प्रकरणस्य नियामकत्वात्. एवं सति, यदा पारिप्लवाख्यकर्मप्रस्तावः, तदा विशेषविनियोगः उक्तः. "पारिप्लवम् आचक्षीत" (आप. श्रौ.सू.10।6) इति. तत्र प्रथमे अहनि "मनुः वैवस्वतो राजा"(तत्रैव) इति. द्वितीये अहनि "इन्द्रो वैवस्वत" (तत्रैव) इति. तृतीये अहनि "यमो वैवस्वतो राजा"(शतप.ब्राह्म.13।4।3।6) इत्यादिः आख्यानविशेषा वाक्यशेषे विनियुज्यन्ते. आख्यानसामान्यपरत्वेतु अहोविशेषः उपाख्यानविशेषविधानं न स्यात्. अतएव पारिप्लवम् इति एकवचनम्. अतो न आख्यानान्तरगन्धसम्बन्धोऽपि, प्रापकाभावात्॥23॥

अतएव च अग्नीन्धनाद्यनपेक्षा॥24॥

एवं "पुरुषार्थो अतःशब्दाद्" (ब्रह्मसू.3।2।1) इत्युपक्रम्य ज्ञानस्य फलसाधने कर्मानपेक्षत्वम् उपपाद्य तत्रैव उपपत्यन्तरम् आह. यतो ज्ञानी ज्ञानेन स्वयमेव यज्ञात्मको जातः, अतएव जरामर्याग्निहोत्रे अग्निः तदिन्धनं समिदादि, तदादयः आज्यादयः तेषाम् अनपेक्षा उक्ता. श्रुतौ तैत्तिरीयके पठ्यते. "तस्यैवं विदुषो यज्ञस्य आत्मा यजमानः श्रद्धा पत्नी शरीरम् इध्मम् उरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निः" (महाना. उप.25) इत्यादिः. एतेन यद् अन्यस्य यज्ञतासम्पादकं, तस्य स्वकार्यसाधने कथं यज्ञापेक्षा भवेद्? इतिभावः सूच्यते॥24॥

इति तृतीयाध्याये चतुर्थपादे प्रथमं पुरुषार्थोअतः शब्दाद् इति अधिकरणम्॥1॥
सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्॥25॥

उक्तन्यायेन ज्ञानं प्रति कर्मणः फलोपकारित्वाभावेऽपि स्वरूपोप-कारित्वम् अस्ति न वा इति चिन्त्यते. तत्र न इति पूर्वः पक्षः, गुरूपसत्ति-तदुपदेशैरेव तत्सम्भवात्. "आचार्यवान् पुरुषो वेद"(छान्दो.उप.6।14।2) इति श्रुतेः. अत्र सिद्धान्तम् आह सर्वापेक्षा इति. सर्वेषां कर्मज्ञानभक्तीनां पुरुषोत्तम-ज्ञानोत्पत्तौ अस्ति अपेक्षा. अत्र प्रमाणम् आह यज्ञादिश्रुतेः इति. यज्ञादिनिरूपिका श्रुतिरेव प्रमाणं यतः इति अर्थः. इदम् अत्र आकूतम् : पुरुषोत्तमएव स्वतन्त्र-पुरुषार्थरूपः. तत्प्राप्तिरेव फलम्. तत्र प्रेमभक्तिजं तज्ज्ञानमेव साधनम् इति "ब्रह्मविद् आप्नोति परम्"(तैत्ति.उप.2।1) इत्यादिना "एतद् विदुः अमृतास्ते भवन्ति"(तत्रैव) इत्यादिश्रुतिसहस्रैश्च प्रतिपाद्यते. "अथ इतरे दुःखमेव उपयन्ति"(बृहदा.उप.4।4।14) इति श्रुत्या ज्ञानरहितानां दुःखमात्रप्राप्तिः उच्यते. एवं सति स्वतो अपुरुषार्थरूपं यज्ञादिकं सर्वार्थतत्त्वप्रतिपादिका श्रुतिः यद् निरूपयति तत् सर्वथा पुरुषार्थसाधनत्वेनैव इति मन्तव्यम्. तच्च निष्कामतयैव कृतं तथा. अतएव वाजसनेयिशाखायां
"यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति" (बृहदा.उप.6।4।5) इत्युपक्रम्य पठ्यते
"तस्माद् लोकात् पुनः एति अस्मै लोकाय कर्मण इति तु कामयमानो अथ अकामयमानो यो अकामो निष्काम आत्मकाम आप्तकामो भवति, न तस्मात् प्राणा उत्क्रामन्ति अत्रैव समवनीयन्ते ब्रह्मैव सन् ब्रह्म अप्येति" (बृहदा. उप.4।4।6)

इत्यादि. अत्र "अथ अकामयमानः" कर्ता निरूप्यते इति शेषः. यः पुमान् कर्मकृतौ अकामः ततो निष्कामः सन् आत्मकामो निरुपधिस्नेहवान् प्रभौ, ततो भगवत्प्राप्त्या "आप्तकामो भवति" इति अर्थः. अत्र 'यथाकारी' इत्यादिना कर्मकर्तुरेव उपक्रमाद् 'अथाकामयमानः' इत्यनेनापि तथाभूतः सएव उच्यते. एवं सति सत्कर्मणि प्रवृत्यर्थं विविधफलानि स्वयमेव उक्त्वा जनान् भ्रामितवान् इति स्वोक्तकरणात् चिरेण दयया निष्कामं करोति, सकामतयापि क्रियमाणेन वैदिककर्मणानेकजन्मभिः संस्कारविशेषप्रचयेनापि तथा. "कषाये पक्वे ततो ज्ञानं प्रर्वतते"(महाभा.शान्तिप.276।39) इत्यादिस्मृतिभ्यश्च ज्ञानोत्पत्तौ कर्मापेक्षा अस्ति इति. 'च'कारेण पुष्टौ अङ्गीकृतस्य सर्वानपेक्षेति सा समुच्चीयते. अतएव "नायमात्मा" (कठोप.2।23) इत्यादिश्रुतिः न विरुध्यते. ननु ज्ञानद्वारा-कर्मादीनामेव फलसाधकत्वम् अस्तु इति शङ्कानिरासाय दृष्टान्तम् आह अश्ववद् इति. यथा स्वेष्टफलसाधकदेशव्यवधानात्मकदेशातिक्रमे अश्वस्य साधनत्वं, नतु तत्तत्फलसिद्धावपि, तथा आधिभौतिकाध्यात्मिकाधिदैविकप्रतिबन्धनिवृत्तावेव तेषां साधनत्वं, नतु भगवत्प्राप्तावपि इति अर्थः. इदं च मुमुक्षुभक्तविषयकम् इति ज्ञेयम्. आत्यन्तिकभक्तिमतां भक्तीतरानपेक्षणात्॥25॥

शमदमाद्युपेतः स्यात् तथापितु
तद्विधेः तदङ्गतया तेषाम् अवश्यानुष्ठेयत्वात्॥26॥

नन्‌ु "तस्माद् एवंवित् शान्तो दान्तः"(बृहदा.उप.4।4।23) इत्यादिना शमादेरेव ज्ञानसाधनत्वम् उच्यते, नतु यज्ञादेः इति चेद्, तत्र आह. शमदमाद्युपेतो भक्तिमार्गेऽपि स्यादेव यद्यपि, तथापि तदङ्गतया "आत्मन्येव आत्मानं पश्येद्" (बृहदा.उप.6।4।23) इति ज्ञानमार्गीयज्ञानाङ्गतयैव शमादिविधेः हेतोः ज्ञानमार्गे तेषाम् अवश्यानुष्ठेयत्वात् तथाविधिः इति अर्थः. भक्तिमार्गे स्वतएव शमादीनां सम्भवेऽपि आवश्यकत्वं न तेषाम् इति भावः॥ 26॥

सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्॥27॥

ननु सत्त्वशोधकत्वेन यज्ञ-शम-दमादेः विधानम् इति मतं न उपपद्यते. "आहारशुद्धौ सत्त्वशुद्धिः"(छान्दो.उप.7।26।2) इति श्रुतेः तद्विरुद्धा सर्वान्नभक्षणानुमतिरपि यतः श्रूयते छन्दोगानाम्. "न ह वा एवंविदि किञ्चन अनन्नं भवति" (छान्दो.उप.5।2।1) तथा वाजसनेयिनां, "न ह वा अस्य अनन्नं जग्धं भवति" (बृहदा.उप.6।1।14) इत्यादि. तस्मात् सत्त्वशुद्ध्यर्थं यज्ञादेः न विधानम् इति प्राप्ते विषयव्यवस्थाम् आह. आहारदौर्लभ्येन प्राणात्यये उपस्थितेः प्राणधारणस्य ज्ञानान्तरङ्गतमसाधनत्वेन आहारस्य देहपोषकत्वे न ततो बहिरङ्गत्वात् तदनुमतिः क्रियते इति अर्थः. अत्र प्रमाणम् आह तद्दर्शनाद् इति. "चाक्रायणः किल ऋषिरापद्‌गत इभ्येन सामिखादितान् कुल्माषान् चखाद्" (छान्दो.उप.1।10।1) इत्यादिश्रुतिदर्शनाद् इति अर्थः. यद्यपि ज्ञानसाधनत्वेन सत्वशुद्धेः अपेक्षितत्वाद्, जाते ज्ञाने तत्साधनापेक्षणात्, "एवंविदि" (छान्दो. उप.5।2।1) इति वचनात् तादृशे सार्वदिक्यपि तदनुमतिः न अनुचिता. "अपि स्मर्यते" (ब्रह्मसू.3।4।29) इत्यनेन अविदुषोऽपि अनुमतेः वक्ष्यमाणत्वाच्च. तथापि आचार्येण अवस्थाविशेष-विषयकत्वम् उक्तं यत्, तेन ज्ञानिनोऽपि अनापदि विहितत्यागो अविहितकरणं च चित्तमालिन्यजननेन ज्ञानतिरोधायकम् इति श्रुत्यभिमतम् इति ज्ञाप्यते. अतएव श्रीभागवते द्वितीयस्कन्धे

"विशुद्धं केवलं ज्ञानं प्रत्यक्सम्यगवस्थितं,
सत्यं पूर्णम् अनाद्यन्तं निर्गुणं नित्यम् अद्वयं,
ऋषे विदन्ति मुनयः प्रशान्तात्मेन्द्रियाशयाः,
यदा तदेवासत्तर्कैः तिरोधीयेत विप्लुतम्"

(भाग.पुरा.2।6।39-40) इति ब्रह्मणा उक्तम्.

"ज्ञानिनामपि चेतांसि देवी भगवती हि सा,
बलादाकृष्य मोहाय महामाया प्रयच्छति"(माकण्डे.पुरा.1।54)

इति मार्कण्डेयेनापि उक्तम्. एषा ज्ञानमार्गीयज्ञानवतो व्यवस्था इति ज्ञेयम्. भक्तिमार्गीयस्य एवम् आपदसम्भवात्.

“अनन्याः चिन्तयन्तो मां ये जनाः पर्युपासते,
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्”(भाग.गीता 9।22)
इति भगवद्वाक्यात्.
“मामेव ये प्रपद्यन्ते मायाम् एतां तरन्ति ते”(भग.गीता 7।14)
इत्यत्र ‘एव’कारेण पुरुषोत्तमज्ञानवतएव मायातरणोक्तेः अक्षरमात्र-ज्ञानवतां तथात्वम् उचितम्॥27॥
अबाधाच्च॥28॥
आपदि तथा अन्नभक्षणेन चित्ताशुद्ध्यसम्भवेन तज्जनितप्रतिबन्धा-भावाच्च न दोषः इति अर्थः॥28॥
अपि स्मर्यते॥29॥
आपदि अविदुषोऽपि दुष्टान्नभक्षणे पापाभावो यत्र स्मर्यते, तत्र विदुषि श्रुत्यनुमते का शङ्का इति अर्थः. स्मृतिस्तु “जीवितात्ययम् आपन्नो यो अन्नम् अत्ति यतः ततः, लिप्यते न स पापेन पद्मपत्रम् इव अम्भसा” (मनुस्मृ.10।104) इति. अथवा. विदुषो दुष्टकर्मासम्बन्धः, “ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा” (भग.गीता 4।37) इति स्मर्यतेऽपि इति अर्थः॥29॥
शब्दश्च अतोऽकामकारे॥30॥
यतो ज्ञानाग्निरेव सर्वकर्मदहनसमर्थइति फलदशायां कामकारेऽपि न दोषः, अतएव साधनदशायां तदभावेन “तस्माद् एवंवित् शान्तो दान्त उपरतः तितिक्षुः” (बृहदा.उप.4।4।23) इत्यादिरूपः शब्दः कामकार-निर्वर्तकः श्रूयते इति अर्थः॥30॥
इति तृतीयाध्याये चतुर्थपादे द्वितीयं सर्वापेक्षा इति अधिकरणम्॥2॥

## विहितत्वाच्च आश्रमकर्मापि॥31॥ (3।4।3)

एवं ज्ञानस्य कर्मनाशकत्वे सिद्धे जातज्ञानस्य आश्रमकर्म कर्तव्यं न वा इति चिन्त्यते. तत्र फलस्य जातत्वात् कृतस्यापि नाश्यत्वेन अप्रयोजकत्वाद् न कर्तव्यम् इति पूर्वः पक्षः. तत्र सिद्धान्तम् आह. यथा ज्ञानिनामपि अनापदि शिष्टानामेव अन्नं भक्षणीयं, विहितत्वात्, तथा आश्रमकर्मापि कर्तव्यमेव, नित्यं विहितत्वाद् इति अर्थः. यथा अनापदि अशिष्टान्नभक्षणं दोषाय, निषिद्धत्वाद्, एतत् च उपपादितं “सर्वान्नानुमतिः”(ब्रह्मसू.3।4।27) इत्यत्र, तथा नित्यत्यागोऽपि प्रत्यवायजनकइति तत् कर्तव्यमेव इति भावः॥31॥
यच्च उक्तं “कृतस्यापि नाश्यत्वेन अप्रयोजकत्वाद् न कर्तव्यम्” इति तत्र आह.
सहकारित्वेन च॥32॥
शमदमादीनाम् अन्तरङ्गसाधनानां सहकारीणि आश्रमकर्माणीति एतद्रहितैः शमादिभिरपि ज्ञानं न स्थिरीकर्तुं शक्यमिति तानि कर्तव्यान्येव इति अर्थः.

संसारवासनाजनकत्वस्वभावो यः कर्मणां सः ज्ञानेन नाश्यतइति न सहकारित्वे अनुपपत्तिः काचिद् इति भावः॥32॥

एवं ज्ञानमार्गीय-ज्ञानस्थैर्यसाधनम् उक्त्वा भक्तिमार्गीय-साधनानां भगवच्छ्रवणादीनाम् इतो आधिक्यम् आवश्यकतां च आह.

सर्वथापि तएव उभयलिङ्गात्॥33॥

भगवच्छ्रवणकीर्तनादयः साधनान्तरवद् विहितत्वेन कर्तव्याएव यद्यपि, तथापि सर्वथापि अन्येषां युगपदुपस्थितौ तदनुरोधम् अकृत्वापि तएव भगवद्धर्माएव कर्तव्या इति अर्थः. कुतः? श्रुतिलिङ्गात् स्मृतिलिङ्गाच्च. श्रुतिलिङ्गन्तु "तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः, न अनुध्यायाद् बहून् शब्दान् वाचो विग्लापनं हि तद्" (बृहदा.उप.4।4।21) इति. "तमेव एकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः" (मुण्ड.उप.2।2।5) इत्यपि. अत्र 'एव'कारेण भगवदतिरिक्तं प्रतिषिध्य तद्विषयकज्ञानानुकूलं प्रयत्नं श्रवणात्मकं 'विज्ञाय' इति विधाय स्मरणमपि तन्मात्रविषयकमेव "प्रज्ञां कुर्वीत"(पूर्ववद्) इतिवचनेन विधाय तदेकनिष्ठताहेतुभूतानामेव शब्दानाम् आवर्तनम् अर्थानुसन्धानमपि कर्तव्यं, न अन्येषाम् इति "नानुध्यायाद् बहून्" इत्यनेन उक्तवती. अत्र 'अनु' इति उपसर्गेण ध्यानस्य पश्चाद्भावित्वम् उच्यते. तेन योग्यतया श्रवणकीर्तनेएव तत्पूर्वभाविनी प्राप्येते. स्मृतिस्तु

"शृण्वन्ति गायन्ति गृणन्ति अभीक्ष्णशः स्मरन्ति नन्दन्ति तव इहितं जनाः,
त एव पश्यन्ति अचिरेण तावकं भवप्रवाहोपरमं पदाम्बुजम्"
(भाग.पुरा.1।9।36) इति.

"महात्मानस्तु मां पार्थ दैवीं प्रकृतिम् आश्रिताः, भजन्ति अनन्यमनसो ज्ञात्वा भूतादिम् अव्ययं, सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः, नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते" (भग.गीता9।13-14) इति. एतेन भगवद्- धर्माणाम् आत्मधर्मत्वेन अन्तरङ्गत्वाद् आश्रमकर्मणो देहधर्मत्वेन बहिरङ्गत्वात् तदविरोधेनैव तत् कर्तव्यम् इति स्थितम्. अतएव भगवद्धर्मान्यधर्मं प्रतिषिध्य तेषां सर्वेभ्य आधिक्यं ज्ञापयितुं "स वा अयम् आत्मा सर्वस्य वशी" (बृहदा. उप.6।4।22) इत्यादिना भगवन्माहात्म्यम् उक्तम् ॥33॥

अनभिभवं च दर्शयति॥34॥

प्राधान्येन भगवद्धर्माएव कर्तव्या इत्यत्र उपोद्बलकान्तरम् अनेन उच्यते. "सर्वं पाप्मानं तरति, नैनं पाप्मा तरति, सर्वं पाप्मानं तपति, नैनं पाप्मा तपति"(बृहदा.उप.4।4।23)इत्यादिना भगवद्धर्मानुरोधेन आश्रमकर्माकरणज-दोषैः अनभिभवं च श्रुतिः दर्शयति. अतो भगवद्धर्माएव सर्वेभ्यः उत्तमानि साधनानि इति अर्थः॥34॥

अन्तरा चापि तु तद्दृष्टेः॥35॥

भगवद्धर्मेभ्यः आश्रमधर्माः हीना इत्यपि अल्पम् उच्यते. अपितु तस्मिन् पुरुषोत्तमे धर्मिण्येव दृष्टिः तात्पर्यं यस्य पुंसः तस्य आश्रमधर्मा अन्तरा च फलसिद्धौ

व्यवधानरूपाश्च इति श्रुतिः दर्शयति इति पूर्वेण सम्बन्धः. 'अन्तरा'-शब्दो अत्र अव्ययात्मको व्यवधानवाचकः. तथाच श्रुतिः "एतद्ध स्म वै तत्पूर्वे ब्राह्मणा अनूचाना विद्वांस प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नो अयम् आत्मा अयं लोकः"(बृहदा.उप.4।4।22) इति ऋणापाकरणहेतुत्वेन लौकि-कोत्कर्षहेतुत्वेनापि प्रजायाः अभीष्टत्वेऽपि तदुत्पादनव्यासङ्गेन भगवदानन्दा-नुभवे अन्तरायो भविष्यति इति तद्दृष्ट्या तत्र उपेक्षां दर्शयति ।35।

अपि स्मर्यते॥36॥

'अपि'शब्देन आश्रमधर्मणां तथात्वं किमु वाच्यं, यतो ज्ञानतत्साधन-वैराग्यादीनामपि अन्तरायरूपत्वं स्मर्यते. "तस्माद् मद्भक्तियुक्तस्य योगिनो वै मदात्मनः, न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेद् इह" (भाग.पुरा.11।22।39) इति भगवद्वाक्यम्॥36॥

विशेषानुग्रहश्च॥37॥

'स्मर्यते' इति पूर्वेण सम्बन्धः. ज्ञानादेः सकाशाद् भक्तिमार्गे फलतो-ऽपि उत्कर्षम् आह. ज्ञानादिसाधनवत्सु अनुग्रहो मुक्तिपर्यन्तएव, भक्तिमार्गेतु, "अहं भक्तपराधीनो हि अस्वतन्त्र इव द्विजः"(भाग.पुरा.9।4।63) इत्यादिवाक्यैः विशेषरूपो मुक्तादिभ्योऽपि भक्तानां व्यावर्तको भगवदनुग्रहः स्मर्यते इति अर्थः॥37॥

गूढाभिसन्धिम् उद्घाटयन् फलितम् अर्थम् आह.

अतस्तु इतरज्ज्यायो लिङ्गाच्च॥38॥

अतः इति पूर्वोक्त-श्रुतिस्मृतिपरामर्शः. तथाच इतरस्याः मुक्तेरपि भक्तिमार्गीयतदीयत्वमेव ज्यायः इति अर्थः. अत्र हेत्वन्तरम् आह लिङ्गाच्च इति. मुक्तानान्तु मायाविनिर्मुक्तम् आत्मस्वरूपमेव, नतु देहेन्द्रियादिकमपि अस्ति, येन भजनानन्दानुभवः स्यात्. भक्तानान्तु देहेन्द्रियादिकमपि मायातत्कार्यरहितत्वेन आनन्दरूपत्वेन च भगवदुपयोग्यतोऽपि तत् तथा इति अर्थः. न हि मुक्तात्मनां कश्चन भगवदुपयोगो अस्ति इति भावः. तदुक्तं श्रीभागवते "न यत्र माया किमुत अपरे हरेः अनुव्रता यत्र सुरासुरार्चिता" (भाग. पुरा.2।9।10) इत्यादि, मुक्तोपसृप्यत्वं च उच्यते. अतएव सप्तमस्कन्धे "देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम्" (भाग.पुरा.7।1।34) इति उक्तम्. पुरवासित्वे देहादेः आवश्यकत्वाद् निषेधो जडात्मकानामेव इति अवगम्यते. 'इतरज्ज्यायः' इति पाठेतु पूर्वोक्ताश्रमकर्मपरामर्शो अतः इत्यनेन उक्तयोरेव वा. एतेन, "सो अश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" (तैत्ति.उप.2।1) इति श्रुत्युक्तफलवत्त्वं तस्य सूच्यते॥38॥3॥

इति तृतीयाध्याये चतुर्थपादे तृतीयं विहितत्वाच्च आश्रमकर्म इति अधिकरणम्॥3॥

तद्भूतस्य तु न अतद्भावो जैमिनिरपि नियमातद्रूपाभावेभ्यः॥39॥

अथ इदं विचार्यते : तदीयानामपि कदाचित् सायुज्यम् अस्ति न वा इति. तत्र भक्तिमार्गस्यापि साधनरूपत्वात् तस्य च मुक्तावेव पर्यवसानात् तदीयत्वस्य

साधनावस्थायाम् उत्कृष्टावस्थारूपत्वात् तेषामपि मुक्तिः आवश्यकी. तथाच फलतो न कश्चिद् विशेषः इति प्राप्ते, उच्यते तद्भूतस्येत्यादि. 'तु'शब्देन मर्यादामार्गीयव्यवच्छेदः. अत्र विश्वासदाढर्याय आह. अन्यस्य का वार्ता, कर्ममात्रनिरूपकस्य जैमिनेरपि यदि कदाचिद् भगवत्कृपया अयं भावो भवेत्, तदा तद्भूतस्य पुष्टिमार्गीयभगवद्भावं प्राप्तस्य तस्यापि न अतद्भावः उक्तभाव-तिरोधानं न कदाचिदपि इति अर्थः. अत्र हेतून् आह नियमादीन्. तैत्तिरीयके, "ते ते धामान्युष्मसि"(तैत्ति.संहि.1।3।6) इति मन्त्रे "यत्र भूरिशृङ्गा अयासः तदुरुगायस्य परमं पदम्"(तत्रैव) इति उक्त्वा, तदनन्तरं तत्र कृतानि कर्माण्यपि, "विष्णोः कर्माणि पश्यत"(तत्रैव) इति मन्त्रेण निरूप्य, पुनः पूर्वोक्तलीला-स्थानं, "तद् विष्णोः परमं पदम्"(तत्रैव) इति पदेन अनूद्य, तस्य नित्यत्व-निरूपणाय उच्यते "सदा पश्यन्ति सूरयः"(तत्रैव) इति. 'सूरयो' विद्वांसः पुरुषोत्तमज्ञानवन्तः इति यावत्. तच्च भक्त्यैव इति 'सूरि'पदेन भक्ताः उच्यन्ते. तथाच भक्तानां सार्वदिकदर्शनं नियम्यते 'सदा' इति पदेन. एवं सति पुष्टिमार्गीयभगवद्भावं प्राप्तस्य मुक्तौ उच्यमानायां तन्नियमो भज्येत इति अर्थः. यच्च उक्तं साधनावस्थायाम् उत्तमावस्थारूपत्वं, परं तदीयत्वस्य फलं मुक्तिरेव इति तत्र आह अतद्रूपेति. उक्तभगवदीयत्वं न साधनरूपम् अपितु मुक्तेरपि फलरूपम्. "मुक्तानामपि सिद्धानां नारायणपरायणः, सुदर्लभः प्रशान्तात्मा" (भाग.पुरा.6।14।5) इतिवाक्याद्. "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः, अथ मर्त्यो अमृतो भवति अत्र ब्रह्म समश्नुते" (बृहदा.उप. 4।4।7) इति श्रुत्या अमृतस्य मुक्तस्य ब्रह्मस्वरूपभोगः उच्यते. सच "यमेव एष वृणुते" (कठोप.2।23) इतिश्रुतेः भगवदीयत्वसाध्यएवेति स्पष्टं फलत्वम् अस्य अतो अतद्रूपत्वम्. किञ्च फलं हि साधनाद् उत्तमं भवति. भगवदीयत्वाद् उत्तमस्य अर्थस्य अभावादपि न मुक्तिः वक्तुम् उचिता. तदुक्तं श्रीभागवते पञ्चमस्कन्धे पूर्वं भक्तिस्वरूपं निरूप्य "तयैव परया निर्वृत्या ह्यपवर्गम् आत्यन्तिकं परम-पुरुषार्थमपि स्वयम् आसादीतं नो एव आद्रियन्ते भगवदीयत्वेनैव परिसमाप्त-सर्वार्था" (भाग.पुरा.5।6।17) इति॥39॥

॥इति तृतीयाध्याये चतुर्थपादे चतुर्थं तद्भूतस्य इति अधिकरणम्॥4॥

## न चाधिकारिकमपि पतनानुमानात् तदयोगात्॥40॥ (3।4।5)

अथ इदं विचार्यते : ध्रुवायेव ब्रह्मादिलोकाधिकारं दत्वा तत्सम्बन्धिफलं ददाति न वा इति. तत्र न इति आह नच इति. तत्र हेतुः पतनानुमानाद् इति. "आब्रह्मभुवनाद् लोकाः पुनरावर्तिनोऽर्जुन" (भग.गीता 8।16) इतिस्मृतेः इति अर्थः. फलस्य सावधित्वाद् इति भावः. किञ्च, तादृशे भगवदीये पतनायोगादपि न तथा. अथवा. तादृशस्य सदा भक्तिरसानुभवात् तदतिरिक्तस्य अनपेक्षणाद् अन्येषां फलानां सम्बन्धाभावाद् इति अर्थः॥40॥

उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम्॥41॥

एके भक्ताः आधिकारीके फले पतनमात्रं न हेयत्वप्रयोजकम् इति वदन्ति, अपितु उपपूर्वं पतनमेव तद् इति वदन्ति, भक्तिभावाच्च्युतेः. अधिकारसमाप्तौ भगवदनुग्रहाशापि कदाचित् सम्भवति इति उपपतनं तत्. मुक्तौतु अपुनरावृत्तेः भक्तिरसाशापि न इति महापतनमेव सा इति भावः. तेन निषिद्धकर्मफलतुल्यत्वं ज्ञापितं भवति. अतएव श्रीभागवते "नारायणपरा लोके न कुतश्चन बिभ्यति, स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः"(भाग.पुरा.6।18 ।28) इति गीयते. भक्तिमार्गेतु साक्षात्सङ्गाभावेऽपि तदीयं भावमात्रमपि अशनवत् साक्षाद् भगवत्स्वरूपभोगवदेव मन्यन्ते. तदुक्तं श्रीभागवते, "अथ ह वाव तव" (भाग.पुरा.6।9।39) इत्यादिना. साक्षाद्भगवद्भोगो जीवस्य असम्भावितः इति शङ्कानिरासाय आह तदुक्तम् इति. "सो अश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता"(तैत्ति.उप.2।1) इति, "अत्र ब्रह्म समश्नुते" (बृहदा.उप.4।4।7) इत्यादिश्रुतिषु साक्षाद् ब्रह्मस्वरूपरसाशनम् उक्तम् इति अर्थः॥41॥
इति तृतीयाध्याये चतुर्थपादे पञ्चमं नच अधिकारिकम् इति अधिकरणम्॥5॥

## बहिस्तूभयथापि स्मृतेराचाराच्च॥42॥ (3।4।6)

अथ इदं चिन्त्यते : प्रचुरभगवद्भावमात्रवतः साक्षात् स्वरूपभोगवतो वा गृहत्यागः कर्तव्यो न वा इति. फलस्य सिद्धत्वाद् न इति पक्षव्यवच्छेदाय, "मद्वार्तायातयामानां न बन्धाय गृहा मता"(भाग.पुरा.4।30।19) इति वाक्याद् बन्धकत्वेन त्याज्यः इति पक्षव्यवच्छेदाय च तुशब्दः भावमात्रे साक्षात्प्रभुसम्बन्धे वा, उभयथापि गृहाद् बर्हिर्गमनं गृहत्यागः इति यावत्. सः आवश्यकः. तत्र प्रमाणम् आह स्मृतेः इत्यादि. "त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबन्धुषु, मय्यावेश्य मनः सम्यक् समदृग् विचरस्व गाम्" (भाग.पुरा. 11। 7।6) इत्यादिस्मृतिः भगवद्भाववतः तत्सङ्गविशिष्टस्यापि बहिर्गमनम् आह. तदाचारोऽपि तथैव श्रूयते, अतः तथा.

अत्र अयम् आशयः : आश्रमधर्मत्वेन गृहत्यागो "यदहरेव" (जाबा.उप. 4) इत्यादिश्रुतिभ्यः पूर्वम् उपपादितोऽपि यद् अधुना पुनः उच्यते, तेन तदतिरिक्तो अयम् इति ज्ञायते. तथाच उक्तवाक्याद् मुमुक्षुमुक्ति-प्रतिबन्धकत्वाभावेऽपि व्यासङ्गस्य तत्र आवश्यकत्वाद् उक्तोभयोरपि अनवरतं प्रभुरसास्वादे प्रतिबन्धकत्वेन तस्य तत्त्यागस्य विप्रयोगरसानुभावकत्वेन च सः कर्तव्यः. यद्यपि स्वेष्टान्तरायत्वेन स्वतएव तत्त्यागो भावी, तथापि "आश्रमाद् आश्रमं गच्छेद्" (भाग.पुरा.11।17।38) इति वाक्याद् अत्र आश्रमान्तर-त्वाभावेन त्यागस्य अविहितत्वशङ्काभावाय इयम् उक्तिः इति॥42॥
स्वामिनः फलश्रुतेरित्यात्रेयः॥43॥

पुष्टिमार्गीयभक्तस्य विहितत्वादिज्ञानम् अप्रयोजकम्. तत्र हेतुः. तस्य भक्तिमार्गस्वामिनः श्रीगोकुलेशादेव फलस्य श्रुतेः. अतो बहिर्गमनं न साधनत्वेन अत्र कार्यम् इति भावः. अत्र, "यमेव एष वृणुते" (मुण्ड.उप. 3।2।3) इति श्रुतिः अनुसन्धेया.

एतद् अनुपदमेव पठ्यते "नायमात्मा बलहीनेन लभ्यः" (मुण्ड. उप.3।2।4) इति. अत्र भगवद्वरणानन्तरमपि जीवबलं कतमं यदपेक्ष्य भगवल्लाभः? इति जिज्ञासायां सर्वात्मभावएव बलम् इति निर्णीयते. तस्यैव मर्यादाबलोपमर्दकत्वाद् भगवद्वशीकारहेतुत्वाच्च. व्रजसीमन्तिनीनां प्रभुवच-नातिक्रममपि कृत्वा स्वरूपपरिग्रहः तद्बलेनैव यतः इति आत्रेय आचार्यो मनुते.

इदम् अत्र अभिप्रेतम् : सर्वात्मभावस्य यद् बलं, तत् तदात्मकस्य प्रभोरेव, तस्य च अयं स्वभावो यद् अन्यद् न रोचते. अतएव व्रजपरिवृढवदनेन्दु-वचनकिरणप्रचारप्रोच्छलत्केवलभावाम्भोधिवचनवीचयो गीयन्ते"यर्ह्यम्बुजाक्ष तव पादतलम् अस्प्राक्ष्म तत्प्रभृति नान्यसमक्षं स्थातुं पारयामः" (भाग.पुरा. 10।26।36) इत्यादयः. अतः त्यागः पृष्ठलग्नएव आयातीति न तदर्थं यतनीयम् इति. विष्णववतारत्वेन पुरुषोत्तमभावस्वरूपज्ञो अयम् इति तथा॥43॥

आर्त्विज्यम् इत्यौडुलोमिस्तस्मै हि परिक्रीयते॥44॥

सर्वत्यागपूर्वकं यद् बहिः प्रभुसमीपगमनं भक्तस्य तद् आर्त्विज्यम् ऋत्विक्-कर्मैव इति औडुलोमिः आचार्यो मन्यते.

तस्य अयम् अभिसन्धिः : यजमानो हि स्वेष्टसिद्ध्यर्थम् ऋत्विज आदौ वृणुते. प्रकृते च, "यमेव एष वृणुते"(कठोप.2।23) इतिश्रुतेः "तस्माद् एकाकी न रमते"(बृहदा.उप.1।4।3) इति श्रुतेश्च स्वक्रीडार्थं भगवान् स्वचिकीर्षीततत्तल्लीलानुरूपान् जीवान् वृणुते. "यूनः स्थविरान् वा" (....... ...........) इति विकल्पाद् एकरूपाणां यथा सोमादिषु वरणं, तथा सर्वात्मभाव-वत्त्वेन एकरूपाणामेव अत्र वरणम्. तत्र यथा स्वीयस्वीयतदङ्गमात्रकरणं तेषां, तथा इतरसम्बन्धनिवर्तनपूर्वकं तद्भोग्यसमर्पकत्वम् अत्र. तदुक्तं भगवता "यदा पुमान् त्यक्तसमस्तकर्मा निवेदितात्मा विचिकीर्षितो मे" (भाग.पुरा. 11।29। 34) इति. अत्र 'पूर्व'पदेन इतरसम्बन्धनिवर्तनोक्त्या सर्वात्मभावः उक्तो भवति. तदनन्तरम् आत्मनिवेदने सति तद्विषयकलीलाकरणेच्छाविषयः सम्भवति. अन्तरङ्ग-लीलाप्रवेशनम् इच्छायां विशेषः. तस्मात् सुष्ठूक्तम् आर्त्विज्यम् इति. एतेन, "न ददाति न पचति"(आप.श्रौ.सू.10।14।6।7) इत्यादिश्रुतेः यथा सोमादौ दीक्षितस्य तद्यागेतरधर्मनिवृत्तिः, सएव परमो धर्मो यतः, तथा पुरुषोत्तमस्य उक्तभक्तैः सह रमणमेव सार्वदिकम्, एतदेव च महन्महत्त्वम् इति सूचितं भवति. प्रकृते भक्तानाम् ऋत्विक्त्वेन निरूपणे हेतुत्वेन तात्पर्यान्तरमपि आह. तस्मै यजमानारब्धकर्मसाङ्गत्वाय ऋत्विक् परिक्रीयते वरणेन स्वकार्य-मात्रोपयोगित्वाय स्वीयः क्रियते, तथा प्रकृतेऽपि. नच "क्वच्चित् कल्याण्यो दक्षिणा"(आप.श्रौत.) इतिप्रश्नवचनात् तदर्थैव तत्प्रवृत्तिः, अत्रतु स्वतःपुरु-षार्थत्वेन भगवदर्था प्रवृत्तिः, अतो वैषम्यम् इति वाच्यम्. नीरागस्यापि वरणसमये तत्प्रश्नस्य आवश्यकत्वात्, तथैव दक्षिणादानमपि, अन्यथा निरङ्गत्वापत्तेः. प्रकृतेऽपि भक्तानां स्नेहादेव प्रवृत्तिः भगवान् स्वानुभवार्थमेव तान् अनुभावयतीति न वैषम्यम्॥44॥

श्रुतेश्च॥45॥

अथर्वणोपनिषत्सु पठ्यते "भक्तिरस्य भजनं तद् इहामुत्रोपाधिनैराश्येनैव अमुष्मिन् मनःकल्पनम् एतदेव च नैष्कर्म्यम्" (गोपा.पू.उप.1) इति.

भक्तिमार्गप्रचारैकहृदयो बादरायणः,
मानं भागवतं तत्र तेनैवं ज्ञेयमुत्तमैः॥ ॥45॥

॥इति तृतीयाध्याये चतुर्थपादे षष्ठं बहिस्तूभयथा इति अधिकरणम्॥6॥

सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्॥46॥

ननु "यमेव" (कठोप.2।22) इति श्रुतिः साधनान्तरनिषेधपूर्वकं वरणस्यैव साधनत्वम् आह, "तस्माद् एवंवित् शान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वा आत्मन्येव आत्मानं पश्येद्" (बृहदा.उप.6।4।23) इति श्रुतिः साधनान्तरमपि आह. एवं विरोधे श्रुतित्वाविशेषात् किम् आदरणीयं, किं न? इति संशये, साधनान्तरविधिरेव आदरणीयः अन्यथा शास्त्रवैयर्थ्यं स्याद् इति प्राप्ते, उच्यते सहकार्यन्तरविधिः इति. मर्यादा-पुष्टिभेदेन वरणं द्विधा उच्यते. तत्र सहकार्यन्तरविधिस्तु मर्यादापक्षेण उच्यते. पुष्टौतु न अन्यापेक्षेति न विरोधगन्धोऽपि. अपरञ्च, साधनं हि कायिकं वाचिकं मानसिकं च विधीयते. तत्र "मनसैव आप्तव्यम्" (कठोप.4।11) इति श्रुतेः तृतीयं मुख्यं, तदपि तावदेव मार्यादिकस्यापि विधेयत्वेन कर्तव्यं, यावत् स्नेहो न भवति. यतः तद्वतः स्नेहवतस्तु उक्तं तृतीयं साधनमपि विध्यादिवत्. यथा तद्वतो विधिः अर्थवादो वा प्रवृत्तौ अप्रयोजकः, तस्य स्वतएव सम्भवात्, तथा भगवत्प्राप्तौ इदम् इति अर्थः. कैमुतिकन्यायेन पूर्वयोः अप्रयोजकत्वम् एतच्छेषत्वादेव आयास्यतीति तृतीयमेव उक्तम्॥46॥7॥

इति तृतीयाध्याये चतुर्थपादे सप्तमं सहकार्यन्तराधिकरणम्॥7॥

## कृत्स्नभावात् तु गृहिणोपसंहारः॥47॥ (3।4।8)

ननु "बहिस्तूभयथा"(ब्रह्मसू.3।4।43) इत्यादिना भगवदीयस्य गृहत्यागः आवश्यकः इति निरूपितम्. *छान्दोग्येतु "आचार्यकुलाद्"(छान्दो. उप.8।15।1) इति उपक्रम्य, छान्दोग्योपनिषदन्ते

"आचार्यकुलाद् वेदम् अधीत्य गुरोः कर्मातिशेषेण अतिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायम् अधीयानो धार्मिकान् विदधद् आत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्य अहिंसन् सर्वाणि भूतानि अन्यत्र तीर्थेभ्यः स खलु एवं वर्तयन् यावदायुषं ब्रह्मलोकम् अभिसम्पद्यते, न स पुनरावर्तते, न स पुनरावर्तते" (छान्दो.उप.8।15।1) इदं विषयवाक्यम्. 'ब्रह्मलोकम् अभिसम्पद्यते' इति गृहिणोपसंहारः कृतः. वाजसनेयिशाखायां च "एतद्ध स्म वै तत्पूर्वे ब्राह्मणा अनूचाना विद्वांसः प्रजां न कामयन्ते"(बृहदा.उप.4।4।22) इत्युपक्रम्य "अथ भिक्षाचर्यं चरन्ति" (तत्रैव) इति पठ्यते. एवं सति विकल्पे सम्भवति उपसंहारस्य तात्पर्यग्राहकत्वाद् गृहिणएव यथोक्तकर्तुः ब्रह्मसम्पत्तिः इति श्रुतेः तात्पर्यम्. त्यागोक्तिस्तु

ब्रह्म एतादृशं यदर्थं सर्वं त्यज्यते इति स्तुतिपरा इति प्राप्ते, गृहिणोपसंहारे हेतुत्वेन तात्पर्यम् आह कृत्स्नइति. त्यागे वाङ्-मनसोरेव भगवति विनियोगः, न सर्वेन्द्रियाणाम्. गृहिणस्तु सर्वैः प्रकारैः भजनं भवतीति, परिजनश्च कृतार्थो भवति इति च भजने कृत्स्नता भवतीति तेन उपसंहारः कृतः इति अर्थः. अतएव "आत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्य" इति उच्यते. अत्र आत्म'पदं भगवत्परम् इति ज्ञेयम्. कर्ममार्गीयगृहिव्यवच्छेदाय 'तु'शब्दः. अत्र इदम् आकूतम् : "भक्तिमार्गो बहुविधः"(भाग.पुरा.3।29।7) इति कपिलदेववाक्यात् केचन भक्ताः स्वगृहेष्वेव स्नेहेन भगवदाकारे विविधोपचारैः सेवां कुर्वन्तः तयैव निर्वृत्या मुक्तिमपि तुच्छां मन्यन्ते. तदुक्तं "मधुद्विट्सेवानुरक्तमनसाम् अभवोऽपि फल्गुः"(भाग.पुरा.5।14।44) इति. तेन भगवद्भजनेएव, तत्रापि पुष्टिमार्गे एव श्रुतेः भरः इति ज्ञायते. पूर्वम् उत्कटभगवद्भाववतां तदर्थं त्यागं निरूप्य, गृहिणो-पसंहारतात्पर्यं पश्चाद् यद् निरूपितवान्, तेन तादृक्भाववतैव त्यागः कार्यः, तद्रहितेनतु गृहएव उक्तरीत्या प्रभुभजनं कार्यं, तेनैव तल्लाभः इति व्यासहृदयम् इति ज्ञायते, उक्तभावाभावे त्यागधर्मानिर्वाहाद् इति. केचन भक्ताः भाषणादि-लीलादर्शनं विना स्थातुम् अशक्ताः प्रचुरभावविवशाशया गृहान् त्यक्त्वा वनं गच्छन्ति. आत्रेयौडुलोमिभ्यान्तु भगवदवतारसामयिकभक्तदशा उक्ता. एते सर्वे फलमार्गीयाः. वाजसनेयुक्तास्तु साधनमार्गीयाः इति न अनुपपत्तिः काचित् ।47॥

मौनवद् इतरेषामपि उपदेशात्॥48॥

किञ्च. सन्न्यासिनः आवश्यकाः ये धर्माः ततो अधिकाः ते गृहिणः सिध्यन्ति इत्यपि हेतोः तेन उपसंहारः कृतः इति आशयेन आह मौनवद् इत्यादि. 'मौन'पदम् अनीहानिलायामादि-त्रिदण्डिधर्मोपलक्षकम्. यथा वागिन्द्रियमात्र-*देहमात्र-चित्तमात्र-नियामकाः ते धर्माः उक्ताः न्यासिनः, तथा इतरेषामपि इन्द्रीयनियामकानां धर्माणाम् "आत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्य" (छान्दो. उप.8।15।1) इतिश्रुत्या गृहिणः उपदिश्यन्तेइति युक्तो गृहिणोपसंहारः इति अर्थः. तत्र नियमनमात्रम्, अत्रतु भगवति विनियोगाद् आधिक्यम् इति भावः. वस्तुतस्तु केवलनियमनस्य अप्रयोजकत्वात् तत्रापि भगवति विनियोगएव तात्पर्यम् इति ज्ञेयम्॥48॥

अनाविष्कुर्वन् अन्वयात्॥49॥

ननु भगवति सर्वेन्द्रिविनियोगाद् गृहिणोपसंहारः इति न युज्यते, "शुचौ देशे स्वाध्यायम् अधीयानः"(छान्दो.उप.8।15।1) इत्यादिकर्म-मार्गीयसाधनश्रुतेः इति आशङ्क्य तत्तात्पर्यम् आह अनाविष्कुर्वन् इति. भगवद्भावस्य रसात्मकत्वेन गुप्तस्यैव अभिवृद्धिस्वभावकत्वाद् आश्रमधर्मैरेव लोके स्वं भगवद्भावम् अनाविष्कुर्वन् भजेत् इत्येतदाशयेन ते धर्माः उक्ताः. गोपेन मुख्यं हेतुम् आह अन्वयाद् इति. यतो भगवता समम् अन्वयं सम्बन्धं प्राप्य वर्तते, अतो हेतोः तथा. अत्र ल्यब्लोपे पञ्चमी. एतेन यावद् अन्तःकरणे साक्षात्प्रभोः प्राकट्यं नास्ति, तावदेव बहिः आविःकरणं भवति, प्राकट्येतु न तथा सम्भवति इति ज्ञापितम्॥49॥

ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्॥50॥

वैदिककर्मकरणे तात्पर्यम् उक्त्वा लौकिकस्य अनावश्यकत्वेऽपि तत्समयम् आह. प्रस्तुतं प्रभुभजनं तत्प्रतिबन्धासम्भवेएव ऐहिकं कार्यम्. ननु ऐहिकं कर्म अस्तु, मा वा, अतः तत्समयोक्तिः व्यर्था इति आशङ्क्य आह तद्दर्शनाद् इति. "आचार्यकुलाद्" (छान्दो.उप.8।15।1) इति उपक्रम्य अग्रे पठ्यते, "धार्मिकान् विदधद्" (तत्रैव) इति. अतो धार्मिकपुत्रविधानम् ऐहिकं कर्म श्रुतौ दृश्यते. अतः तत्समयोक्तिः आवश्यकी. अन्यथा श्रुतौ उक्तम् अस्ति इति प्रस्तुतबाधेऽपि तत्करणे फलप्रतिबन्धः स्याद् इति भावः॥50॥

इति तृतीयाध्याये चतुर्थपादे अष्टमं गृहिणोपसंहाराधिकणम्॥8॥

एवं मुक्तिफलानियमः

तदवस्थावधृतेः तदवस्थावधृतेः॥51॥ (3।4।9)

ननु "तस्य तावदेव चिरं यावद् न विमोक्ष्ये अथ सम्पत्स्ये" (छान्दो. उप.6।14।2) इति श्रुतौ मुक्त्यनन्तरं ब्रह्मसम्पत्तिः श्रूयते. सातु पुरुषोत्तमसङ्गे लीलारसानुभवातिरिक्ता वक्तुम् अशक्या, "मुक्तोपसृप्यव्यपदेशाद्"(ब्रह्मसू. 1।3।2), "मुक्तानामपि सिद्धानां नारायणपरायणः, सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने"(भाग.पुरा.6।14।5) इति स्मृतेश्च, मुक्तेः फलं भक्ति-रसानुभवएव. एवं सति उक्तगृहिणः तत्फलं भवति न वा? इति संशये निर्णयम् आह. एवम्भूतस्य उक्तरूपस्य मुक्तस्य मुक्तेः यत् फलं भक्तिरसानुभवः, तस्य अनियमः, तस्य भगवदिच्छाधीनत्वात्, साधनाप्राप्यत्वात्. अतएव "मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम्"(भाग.पुरा.5।6।19) इति शुकवाक्यम्. अत्र औत्सर्गिकं हेतुम् आह तदवस्था इति. "न स पुनरावर्तते" (छान्दो.उप. 8।15।1) इत्यस्याः आवृत्या मुक्त्यवस्थायाएव सार्वदिकत्वेन निर्धारः क्रियते. यद्यपि एवं मुक्तिफलाभावनियमएव आयाति, नतु तदनियमः, तथापि "तस्य तावदेव चिरम्"(तत्रैव 8।14।2) इत्यादिप्रमाणैः "न स पुनरावर्तते" (तत्रैव) इति श्रुत्या समं विरोधाभावाय औत्सर्गिकी तदवस्था. तत्फलन्तु कस्यचिद् अत्यनुग्रहेण पुष्टौ प्रवेशने भवति इति स्वाभिप्रायं प्रकटीकुर्वता बादरायणेन अनियमः इति उक्तम्. एवं सति "न स पुनरावर्तते" इति श्रुतिः प्रपञ्चे पुनरावृत्तिं निषेधति, नतु तदतीतेऽपि इति ज्ञेयम्. समाप्तिज्ञापनाय आवृत्तिः.

अथवा. श्रुतौ तदवस्थावधृतेः हेतोः अस्माकमपि तदवस्थावधृतिः यतो अतः फलानियमनिश्चयोऽपि इति अर्थः. एवं सति मुक्तिपर्यन्तं साधनं भगवद्भावः इति निर्णयः सम्पन्नः॥51॥9॥

इति तृतीयाध्याये चतुर्थपादे नवमं मुक्तिफलानियमः इति अधिकरणम्॥

इति श्रीवेदव्यासमतवर्ति-श्रीवल्लभाचार्यविरचिते
ब्रह्मसूत्राणुभाष्ये तृतीयाध्यायस्य चतुर्थः पादः
समाप्तो अयम् तृतीयो अध्यायः॥